Tanjore Sarasvati Mahal Series No. 172.

# DHARMAVIJAYA CHAMPU

*By*

(Bhuminatha Kavi or Nalla Dikshita)





Tanjore Maharaja Serfoji's
Sarasvati Mahal Library, Thanjavur.



1980.] [Price: Rs

Tanjore Sarasvati Mahal Series No. 172.

# DHARMAVIJAYA CHAMPU

*By*

(Bhuminatha Kavi or Nalla Dikshita)



*Edited with introduction in Sanskrit and Tamil*

*By*

K. E. GOVINDAN, Siromani, Vidyavaridhi,
Former Sanskrit Pandit of the T. M. S. S. M. Library.



*Published by*

**ADMINISTRATIVE COMMITTEE OF**

**The Tanjore Maharaja Serfoji's Sarasvati Mahal Library,**

**Thanjavur.**



***Printed at***

Sarasvati Mahal Library Press, Thanjavur.

Price Rs. 3—75. ] [ A. D. 1980.



तंजापुरी सरस्वतीमहालय ग्रन्थमालायाः पुष्पम् १७२.

# ॥ धर्मविजयचम्पूः ॥

(श्रीभूमिनाथकविप्रणीता)



सरस्वतीमहालयभूतपूर्वसंस्कृतपण्डितेन
विद्यावारिधि-शिरोमणि-बिरुदभाजा

**के. ई. गोविन्देन**

संशोध्य, संस्कृतद्राविडीप्रस्तावनासहितं परिष्कृत्य
सम्पादिता ।



तंजापुरी सरस्वतीमहाल् ग्रन्थालय निर्वाहकसमित्या
भारत सर्वकार धनसाहाय्येन प्रकाशितः
विजयतेतमाम् ।



मूल्यम् रू. ३-७५.]  [ क्रैस्ताब्दाः १९८०

DHARMAVIJAYA CHAMPU

# PREFACE.



Dharma Vijaya Champu is a Champu (both poetry and prose mixed) from of literature written in Sanskrit. The author of this work is Bhuminatha Kavi, a disciple of Ramabhadra Deekshita.

This literary piece describes the greatness of Shahaji in protecting the Hindu Dharma. We find in this work description of important and holy places like Bhadrachala, Kanchipuram, Chidambaram, Thanjavur, etc.

The Editor Dr. K. E. Govindan, former Sanskrit Pandit of the Tanjore Maharaja Serfoji's Sarasvati Mahal Library has done his best to edit this work neatly, and for that he deserves our thanks.

We are very greatful to the Government of India for helping the Library with the Grant to publish this interesting book.

Our thanks are due to the entire staff of the Library for their co-operation in making this work see the light.

The Library Press deserves our appreciation for the neat execution of the work.

Thanjavur,
26—5—80.

D. SUNDARESAN, I. A. S.,
Collector and Chairman
T. M. S. S. M. Library Committee,
Thanjavur.



## उपोद्घातः

'दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये'

धर्मविजयचम्पूनामकमिदं ग्रन्थरत्नं समेषां विपश्चिदपश्चिमानां पुरतः नयनयोः प्रप्रथमतया मुद्राप्य प्रकाशीक्रियते सप्रश्रयं सानन्दं च ।

### नल्लाध्वरी, तत्कृतयश्च

ग्रन्थरत्नस्यास्य रचयिता भूमिनाथकविः, नल्लाध्वरी, नल्लाकविः, नल्लबुधेन्द्रः इति बहुधा प्रथितः निखिलमहीमण्डलस्य मण्डनायमानस्य तञ्जापुरस्य प्राग्भागे कुम्भघोणपरिसरे विराजमाने विशालतरगार्हपत्याद्यनेकाग्निशालपवित्रितैः अहरहरनुष्ठीयमानविविधसवनहोमैः सकलकल्याणगुणपुञ्जैः समस्तवेदवेदान्ताद्यनन्तशास्त्रमर्मतत्त्वज्ञैः धर्मराजाध्वरीन्द्रादिमहीसुरश्रेष्ठैः अध्युषिते प्रसिद्धे [1] कण्डरमाणिक्याख्ये ग्रामे [2] कौशिकगोत्रोत्पन्नः [3] छन्दोगः [4] शास्त्रसाहित्याद्यनेकप्रबन्धनिर्माता [5] बालचन्द्रमखीन्द्रतनयः

---

1 जयति किल चोलमण्डलमण्डनमुद्दण्डपण्डिताध्युषितम् ।
कण्डरमाणिक्यमिति ख्यातं महदग्रहारमाणिक्यम् ॥ (शृ. स. भा. पृष्ठं ३)

2 'इति कौशिककुलजलधिराकासुधाकरश्रीबालचन्द्रमखिनो वरतनूभवश्रीनल्लाबुधकविशेखरविरचितः शृङ्गारसर्वस्वं नाम भाणः सम्पूर्णः'

(शृ. स. भा. पृष्ठं ३८)

3 काव्यमालासीरिस् मध्ये मुद्रितशृङ्गारसर्वस्वभाणभूमिकायां टि. एस्. कुप्पुस्वामिशास्त्रिणा तथोक्तम् ।

4 'सूत्रधारः — जीवन्मुक्तिकल्याणं नाम नाटकम्; यस्य कविः सुभद्रापरिणय-शृङ्गारसर्वस्व - चित्तवृत्तिकल्याण - अद्वैतरसमञ्जर्याद्यनेकप्रबन्धनिबन्धनाभिनन्दनीयः श्रीबालचन्द्रमखीन्द्रनन्दनो नल्लाध्वरी' (जी. क. पृष्ठम् ९)

5 बालचन्द्रमखीन्द्रस्य तनयो विनयोज्ज्वलः । (शृ. स. भा. पृष्ठं २)

स्वकवितामृतरसाभिषेकसन्तुष्टश्रीरामप्रसादलब्धमाहात्म्यतस्य रामभद्रदीक्षित-[6] वंशजन्मा [7] गणेशभक्ताग्रेसरः ।

अयं च महाकविः गणेशस्यानुग्रहादेव अमृतरसधारासहचरीं वाचं लब्ध्वा रसपरिपूर्णं काव्यं च कर्तुं प्राभवमिति स्वयमेव शृङ्गारसर्वस्वभाणे [8] द्वाभ्यां पद्याभ्यां न्यरूपयत् ।

बहुभ्यः श्रोतव्यम् बहुधा च श्रोतव्यम् इत्युपनिषदुपदिष्ट-वर्त्मानुसारं [9] रामभद्रदीक्षित - [10]रामनाथमखि - [11]परमशिवेन्द्राचार्य-

---

6 'तदीयवंशजन्मन' इति धर्मविजयचम्पूपुष्पिकायाम् (पृष्ठं ३४)

7 अद्वैतमेव परमार्थतया विवेक्तु-
मङ्गीकृतद्विपनराकृतिसन्निवेशः ।
अद्वैतगोचरमशेषविशेषमन्त-
राविष्करोतु वरदो मम विघ्नराजः ॥ (अद्वैतरसमञ्जरी)

8 असौ तत्र श्रीमानमृतरसधारासहचरीं
गिरां देवीं बिभ्रद्गजमुखकृपातः परिगताम् ।
सपर्यासन्तुष्यद्गुरुपरिवृढानुग्रहपरि-
स्फुरत्प्रत्यग्ज्योतिर्जयति किल नल्लाबुधमणिः ॥ (शृ. स. भा. पृष्ठ. २)
निबध्नन्ति स्वां कृतिमिह कियन्तो न भुवने
रसं किं तु व्यङ्क्तुं प्रभवति कविष्वेषु कतमः ।
मम श्रीमल्लम्बोदरदरकृपापाङ्गितगिरः
प्रबन्धेऽस्मिन् चेतः कुतुकमनुबध्नाति तदपि ॥ (शृ. स. भा. पृष्ठं ३)

9 'रामभद्राध्वरिवरप्रियशिष्यस्य' इति धर्मविजयचम्पूपुष्पिकायाम् (पृ. ३४)
'रामभद्रचरणारविन्दयोराश्रयप्रबलितश्चिकीर्षति' इति च (ध. वि. च. पृष्ठं २)

10 'को न वेद विश्रुतः खल्वयम्; यस्य विद्यागुरुः सर्वतोमुखप्रमुखमखसन्तर्पित-कन्दर्पशासनः षड्दर्शनीप्रौढशिष्यप्रशिष्यपरम्परासम्पादितयशःकन्दलः श्रीमान् रामनाथमखी'। (शृ. स. भा. पृष्ठं. ३)

11 भुवनाद्भुतानुभावं परमशिवेन्द्राभिधं भजामि गुरुम् ।
यदपाङ्गव्यापारः पुंसां संसारतारको भवति ॥ (अ. र. म. व्या. परि.)

[12]सदाशिवब्रह्मेन्द्राद्यनेकाचार्यवर्येभ्यः तच्चरणाम्बुजसेवासमधिगतव्याकरण–साहित्य–अध्यात्मशास्त्रः सुगृहीतनामा नल्लाध्वरी [13]पञ्चविंशे वयसि अतिचित्रकमकवनपथा कदर्थितवाग्देवीकः तञ्जनगराधीश[14]शहजिभूपति–कृपापात्रभूतः तत्सभायामास्थानपण्डितेष्वन्यतमो व्यराजत ।

अस्य गुरोः रामनाथमखिनः रामभद्रदीक्षितस्य समकालिकत्वं तञ्जनगराधीशस्य शहजिमहाराजस्य सदस्यत्वं च [15]षड्दर्शनीसिद्धान्तसंग्रहे स्पष्टमुक्तं भवति । एवं च शहजिमहाराजस्य १६८४–१७१० काल इति ऐतिहासिकैर्निश्चितत्वात् रामनाथ-रामभद्रयोः तत्सदस्यत्वात् एतयोः शिष्यत्वा-

---

परमानन्दयोगीन्द्रपूज्यपादाभ्यनुज्ञया ॥ (अ. र. म.) इति च ।

12 वेदान्तसूत्रवृत्तिप्रणयनसुव्यक्तपाण्डित्यम् ।
वन्देऽवधूतमार्गप्रवर्तकं श्रीसदाशिवं ब्रह्म ॥ (अ. र. म. व्या. परि.)
अद्वैतरसमञ्जरीव्याख्यायां परिमलाख्यायामवसाने —
'इति कौशिककुल ... ... ... ... श्रीसदाशिवब्रह्मपूज्यपादानुग्रहभाजनस्य श्रीनल्लाकवेः कृतिषु स्वकृतायाः अद्वैतरसमञ्जर्याः व्याख्या परिमलः संपूर्णः' इति चोक्तम् ।

13 अस्माभिः पञ्चविंशे वयसि मदवशे पण्डितंमन्यमुख्यैः
तत्तादृक्षातिचित्रक्रमकवनपथव्यापृतैस्तापिताऽसि । (ध. वि. च. पृष्ठं २)

14 'इति भोसलकुलजलधिकलानिधिशहजिसार्वभौमवात्सल्यपात्रतातिमात्रीकृत-मनीषाविशेषैः' (प. म. म. पुष्पिकायाम्)
'इति श्रीमद्विश्वविदितभोसलकुलपयोधिसम्भवशहजिराजसन्दर्शनमात्रसमुद्वेल-कृतसारस्वतस्य' (ध. वि. च. पुष्पिकायां पृष्ठं १५) चोक्तम् ।

15 रामभद्राध्वरिवरो रामनाथमखीश्वरः ।
नरहर्यध्वरिमणिः पेरियप्पबुधाग्रणीः ॥
श्रीवेङ्कटेशविबुधः श्रीमान् यज्ञेश्वराध्वरी ।
मखी च श्रीनिवासार्यो महतामपि संमतः ॥
शासनाक्षरमाकर्ण्य शाहराजस्य धीमतः ।
सप्तैते शास्त्रसिद्धान्तान् संगृह्णन्ति यथामति ॥ (ष. सि. सं.)

च्चास्य नलाध्वरिकवेः कालः क्रैस्तवीय सप्तदशशतकस्यान्तिमभागः तदुपरि-तनाष्टादशशतकस्य पूर्वभागश्च नातः प्राचीन इति निश्चितं भवति ।

शिवगीतातात्पर्यप्रकाशिकायाः प्रणेतुः परमशिवेन्द्राचार्यस्यापि उक्तक्रैस्तवीयशतके स्थितिः तच्छिष्यस्य तञ्जपुराधिनाथशहजिभूपसदस्यस्य वेङ्कटकृष्णदीक्षितस्य [16]कुशलवविजयनाटकस्थश्लोकादवगम्यते ।

नलाध्वरिणा अनेन बह्व्यः कृतयः सन्दृब्धाः । तासूपलभ्यमाना इमाः —

(I) धर्मविजयचम्पूः — अधुना प्रकाशिता ।

(II) [17]अद्वैतरसमञ्जरी — ग्रन्थोऽयमद्वैतसिद्धान्तस्य स्वरूपं वसन्ततिलकवृत्तघटितपद्येषु सङ्क्षेपेण निरूपयति ।

(III) [18]अद्वैतरसमञ्जरीव्याख्या परिमलः — पद्यैः गुम्फितस्या-द्वैतरसमञ्जरीग्रन्थस्य विवरणरूपः ।

IV [19]शृङ्गारसर्वस्वभाणः — भाणोऽयं [20]उमाकान्तचरणाम्बुज-द्वन्द्वध्यानैकपरस्य रत्नगिरीशाध्वरिसुतस्य वैयाकरणस्य वैद्य-

---

16 श्रीरङ्गपट्टणपतित्रिशिरः पुरेशचेञ्जीपुराधिपतितञ्जपुराधिनाथैः ।
उच्चैर्यथोत्तरमुदञ्चितगौरवश्रीरास्ते सुखं शहजिराजपुरेऽधुनाऽसौ ॥
स किल पलकचेरिग्रामवास्तव्यविद्वज्जनमकुटवतंसाद्वासुदेवाध्वरीन्द्रात् ।
अधिगतपदवाक्यन्यायतन्त्रस्त्रिलोकी गुरुपरमशिवेन्द्राध्यापितब्रह्मविद्यः ॥
(कु. वि. ना.)

17 मुद्रिता — वाणीविलास् सीरिस्, श्रीरङ्गम्

18 ,, ,, ,,

19 मुद्रितः (काव्यमालासीरीस् संख्या ७८ नि. सा. बम्बई १९२५)

20 कामारातिपदारविन्दयुगलध्यानैकबद्धादर-
स्तन्माहात्म्यवशेन शैशवदशासंप्राप्तविद्यायशाः ।

नाथस्य [21]निजसुहृदः वचनगौरवात् [22]विंशतेर्वयसः प्रागेव विरचितः ।

V [23]जीवन्मुक्तिकल्याणम् — कृष्णमिश्रकृतप्रबोधचन्द्रोदय-सदृशमिदं नाटकं पञ्चाङ्कोपेतमद्वैतसिद्धान्तप्रदर्शनपरम् ।

VI [24]चित्तवृत्तिकल्याणम् — अयमपि पूर्वग्रन्थसदृशः ।

VII [25]सुभद्रापरिणयम् — सुभद्रायाः विवाहं सरसशैल्या निरूपयति । इदमपि स्वसख्युर्वचनगौरवात्कृतमिति [26]टि. एस. कुप्पुस्वामिशास्त्रिणः ।

VIII [27]पद्मणिमञ्जरी — कोशग्रन्थोऽयं अनेन [28]श्रीधर-वेङ्कटेश-वेङ्कटेश्वरशास्त्रिसचिवेन ग्रथितः ।

---

दान्तो रत्नगिरीशाध्वरिसुतः स्वाधीनपाताञ्जल-
व्याहारोऽयमलङ्करोति जगतीं श्रीवैद्यनाथस्सुधीः ॥ (शृ. स. भा. पृष्ठं. ३)

21 स वाणं प्राणयत् बाल्ये सख्युर्वचनगौरवात् । ( „ „ )

22 प्रागेव विंशद्वयसः प्रबन्धा नल्लाकवीन्द्रेण सुधीश्वरेण ।
शृङ्गारसर्वस्वमिति प्रतीतः सन्दर्भितोऽयं सरसः प्रबन्धः ॥ (शृ. स. भा. पृष्ठं ३८)

23 मुद्रितम् (The Journal of the Sankara-Gurukula, Srirangam Vol. III No. 9)

24 अस्योल्लेखः जीवन्मुक्तिकल्याणनाटकस्यादौ दृश्यते ।

25 अस्योल्लेखः जीवन्मुक्तिकल्याणनाटकस्यादौ दृश्यते ।

26 शृ. स. भा. भूमिकायाम्

27 T. D. C. Vol. IX Page 3854-3855

28 'इति भोसलकुलजलधिकलानिधिशहजिसार्वभौमवात्सल्यपात्रतातिमात्रीकृत-मनीषाविशेषैः वेङ्कटेश्वरशास्त्रि-नल्लाशास्त्रि - श्रीधरवेङ्कटेशशास्त्रिभिः पद्मणि-मञ्जरी ढान्तपर्यन्तं यथामति लिखिता ' इति प. म. पुष्पिकायाम् ।

## शहजिभूपः, तत्कृतयः, तत्सम्बन्धिन्यः कृतयश्च

[29]भोसलवंशो नाम सूर्यवंशः, कोसलवंश इति यावत्। यथा सूर्यवंश्याः रामादयाः शौर्यादिगुणोपेता आसन् तद्वदिमेऽपि। कोसल इति पदस्य आद्याक्षरविपरिणामेन भोसल इति व्यवहारः लोकैः कृत इति [30]श्रीधरवेङ्कटेशशास्त्रिणः अभिप्रायन्। [31]अथवा भास्वच्छब्दस्यापभ्रंशेन वा तथा व्यवहारः।

[32]भोसलवंश्येषु प्रसिद्धः मालोजीनामा अहमदनगराधीशस्य निजामशाहवंशीयस्य मुर्तिझा नामकस्य सेनापतिरासीत्। अस्य पुत्रः [33]शहजि नामा स्वपितृमालोजीकालादूर्ध्वं [34]तामेव पदवीमधिरुह्य बहूपकारमकरोत् अहमदनगराधीशस्य। अनन्तरं सः देहलीस्थसुल्तानस्य, बीजपूर्सुल्तानस्य बहूपकारं कृतवान्। तेन परितुष्टः बीजपूर्सुल्तान् [35]बेंगलोरुनगरे जार्गीदार-

---

29 अस्ति प्रतीतं भुवनेऽनवद्यं भास्वत्कुलं भोसलनामधेयम्।
(शा. वि. प्रथमसर्गे श्लो. ५)

30 आहुस्तदेवाक्षरभङ्गिभेदैर्भास्वत्कुलं भोसल नाम लोकाः। (शा. वि. प्र. स. श्लो ६)

31 'आहुस्तदेव' इति श्लोकटिप्पण्यां डा. वि. राघवन् महाभागाः

32 (शा. वि. प्र. स. चतुर्विंशश्लोकटिप्पण्यां डा. राघवन्महाशयाः।

33 मालोजिभूभर्तुरभूदशेषमान्यस्तनूजो भुवि शाहभूपः।
(शा. वि. प्र. स. श्लो ११) अयमेव प्रकृतधर्मविजयचम्पूनायकस्य पितामहः। अत एवास्य प्रथमशाहजी इति व्यवहारः।

34 परम्परोपागतमप्रकम्प्यं कैङ्कर्यभागभूपतिचक्रवालम्।
मालोजिभूभर्तुरनन्तरं स राज्यं समालम्बत शाहराजः॥
(शा. वि. प्र. स. श्लो १२)

35 शा. वि. त्रयोविंशे पुटे चतुस्त्रिंशच्छ्लोकटिप्पण्यां डा. राघवन्महोदयाः।

पत्न्यां अमुं न्ययुङ्क्त । अस्य शाहजीराजस्य [36]प्रथमपत्न्यां जीजानाम्न्यां शिवाजिसंभाजिनामानौ द्वितीयपत्न्यां तुक्कानाम्न्यां एकोजी चेति त्रयः तनयाः समभूवन् ।

स्वपितुः प्रथमशाहभूपस्य कालात्परं एकोजी तत्पदमधितिष्ठन् दिशः विजिगीषुः [37]बेंगलोरुतः निजसैन्येन साकं प्रस्थाय तञ्जापुरमागत्य तत्रत्यं अलगिरिनायकनामानं नायकराजं समरे विजित्य नायकवंशोत्पन्नं चेंगमलदासं राजपदव्यामधिरोप्य अनन्तरं [38]तञ्जापुरीमात्मसात्कृतवान् ।

[39]अस्य एकोजिराजस्य स्वप्ने तत्कुलदैवतं शिवः आविर्भूय 'यवनानामुन्मूलनायाहमेवावतितीर्षुरासम् । त्वमद्य इङ्गिलवंशजातायाः दीपाम्बिकायाः पाणिं गृहाण । यस्याः किल पूर्वजन्मनि आराधनेन सन्तुष्टोऽहं "तव सुतो भविष्यामि" इति प्रतिज्ञामकरवम्' इत्यभिधाय तिरोबभूव । तथैव सोऽपि तां परिणीय पुत्रद्वयमवाप ।

---

36 शम्भाजराजश्च शिवाजिराजो जीजाम्बिकायां तनयावभूताम् ।
तुक्काम्बिकायां सुत एकभूपः तस्य त्रिभिस्तैर्मुदितं मनोऽभूत् ॥
(शा. वि. प्र. स. श्लो २८)

37 स कदापि दिशः प्रतापवान् विजिगीषुः क्षितिपालकशासनः ।
निरगादथ बेंगलोरुतस्तुरगानीकितभूमिमण्डलः ॥ (शा. वि. द्वि. स. श्लो ३५)

38 महसां निधिरित्थमेकभूरमणश्चोलपतिं निरस्य तम् ।
स्वकरेऽकृत चोलमेदिनीमपि तञ्जानगरं तदास्पदम् ॥
(शा. वि. द्वि. स. श्लो. ४५)

39 अयं विषयः शाहेन्द्रविलासे प्रथमसर्गे ४७ श्लोकात् ५४ श्लोकान्तमुपवर्णितः श्रीधरवेङ्कटेशशास्त्रिभिः ।

40भोंसलवंशोत्पन्नस्य स्वपूर्व्यस्य कस्यचित् अनपत्यतया क्लिश्यमानस्य "शाह-शरीफ्" नाम्नः यवनाचार्यस्यानुग्रहात् सन्ततिर्जाता । तन्मनसिकृत्य यवनाचार्यस्य स्वीयां कृतज्ञतां आविश्चिकीर्षुः सन् स्वपुत्रयोः प्रथमस्य शाह इति द्वितीयस्य शरफ् इति अन्ते जीपदं संयोज्य नाम चकार । तदेव कालक्रमेण शाहजी, शरफोजी इति नाम्ना प्रथते स्म ।

41भगवतः शिवस्यांशभूतोऽयं शाहभूपः बाल्ये एव अधीत-संस्कृतविद्यः सम्पादितान्ध्रमहाराष्ट्रभाषासौलभ्यः शिक्षितसङ्गीतशास्त्रः एक-भूपकालात्परं तञ्जापुरीं स्वानुजाभ्यां शरभतुलजाभ्यां सह परिपालयति स्म । यथा धारानगराधिपतेः भोजस्य सभायां नवमणयः कालिदासादयः कवयः

---

40 One of his ancestors was childless for long and be-got children in the evening of his life owing to the blessings of a Muh Fakir by name Shah-Sherif. Consequently the termed his first son with the former part of his name Shah and Ji being the suffix showing reverence and his second son as Sherif. But the Sanskrit poets are gifted with the power of giving an Indian Colour of the foreign terms and began to change the pronounciation as Shahaji aud Sarfoji. (T. D. C. Vol. XIX Introduction page XXVIII).

41 तस्यां सुताः स्युस्तव तत्र भूप मदंश एको महनीयकीर्तिः ।
भवेदमुष्यावरजौ सदक्षौ स्यातां कुलेन प्रभविष्यते च ॥

(शा. वि. प्र. स. श्लो. ५३)

'अद्य किल साक्षात्कलेरुत्तमावतारस्य म्लेच्छपतेर्निरासेच्छया सकलप्रजापरिरक्षण-विचक्षणो धरणिमवतीर्णो मदीयांश एव भोसलवंशं परिष्कुर्वन् सर्वसद्गुणरत्न-रत्नाकरः शाहमहाराजो नाम'

(ध. वि. च. पृष्ठं. ५)

आसन् तथा विविधशास्त्रवशीकृतहृदयस्य [42]अभिनवभोजस्य शाहभूपस्य सभायां [43]बहवः पण्डितप्रकाण्डाः, वेदतदङ्गतत्त्वज्ञाः, सर्वतोमुखाद्यनेकमख-परम्परासमाराधितयज्ञेश्वराः व्यलसन्। तेभ्यः [44]शाहराजपुरनामकं ग्रामं दत्वा आत्मानं धन्यममन्यत ।

यथा भोजराजेन सरस्वतीकण्ठाभरणादयः ग्रन्थाः प्रणीताः तथा अनेनापि केचन ग्रन्थाः संस्कृत - आन्ध्र - महाराष्ट्रभाषासु प्राणीयन्त । तासु संस्कृते उपलभ्यमाना इमाः ––

I [45]चन्द्रशेखरविलासनाटकम् ।

II [46]शब्दरत्नसमन्वयकोशः ।

III [47]शब्दार्थसङ्ग्रहः ।

एवं आन्ध्रभाषायां विंशत्यधिकाः महाराष्ट्रभाषायां दशाधिकाः प्रबन्धाः कृताः । तेषां नामानि सरस्वतीमहाल्स्थ - तेलगु - महाराष्ट्रभाषा - केटलागतः अवसेयानि, विस्तरभिया नोक्तान्यत्र ।

---

42 'इत्यभिनवभोजराजशाहमहीमहेन्द्र ... ... ' (ध. वि. च. पृष्ठं ३४)

43 पण्डितानां नामानि वि. राघवन्महाभागैः शाहेन्द्रविलासस्य आंग्लभूमिकायां ३९ तः ४९ पृष्ठेषु सुनिपुणमुक्तानि, तत एव अवसेयानि इति नात्र प्रपञ्चितम् ।

44 इदनीमस्यैव 'तिरुविशनल्लूर' इति नाम ।

45 मुद्रितम् — सरस्वतीमहाल् सीरीस् १९६३.

46 ,, गायिकवाड् - ओरियण्टल् सीरिस्. बरोडा ।

47 मातृकारूपेणैवाद्य यावदस्ति ।

शाहमहीपसभास्थविद्वांसः शाहराजस्य सम्पूर्णं जीवनं तद्गुणगण-वर्णनद्वारा स्वकृतप्रबन्धेषु प्रस्तुत्य आत्मानं श्रोतृन् चास्मान् पावयन्ति स्म। अद्य यावदस्मद्दृष्टिपथमागता इमे द्वादशग्रन्थाः –

I [48]धर्मविजयचम्पूः – नल्लाध्वरिकृता (इदानीं प्रकाशिता)

II [49]शाहेन्द्रविलासः – श्रीधरवेङ्कटेशकृतः

III [50]शृङ्गारमञ्जरी - शाहजीयनाटकम् – पेरिअप्पकविकृतम्

IV [51]भोसलवंशावलिः – गङ्गाधरकृतः

V [52]कोसलभोसलीयम् – शेषाचलविरचितम्

VI [53]शाहराजछपदी – श्रीनिवासकृता

VII [54]शाहराजसभासरोवर्णिनी – लक्ष्मणकविकृता

VIII [55]शाहराजनक्षत्रमाला — नारायणकृता

---

48 मुद्रिता सरस्वतीमहाल् सीरीस् 1980

49 „ „ „ 1952

50 मातृता R. Nos. 1843; 5605 (G. O. L.)

51 „ T. D. C. Vol. VII (Kavya) D. No. 4232

52 „ „ „ „ 4233

53 „ „ „ „ 4234

54 „ „ „ „ 4235

55 „ „ „ „ 4236

IX 56सुमतीन्द्रजयघोषणा -- सुमतीन्द्रकृता

X 57शाहराजीयम् -- लक्ष्मणकविकृतम्

XI 58शाहविलासगीता — ढुण्ढिराजव्यासकृता

XII 59शाहराजाष्टपदी — सङ्गीतग्रन्थः

उक्तेषु द्वादशसंख्याकनिबन्धेषु प्रथमद्वितीयौ विना अन्ये सर्वे अद्यापि तत्र तत्र कोशागारेषु मातृकावस्थायामेव सन्तीति महद्विषादास्पदम्।

## धर्मविजयचम्पूस्वरूपकथनम्

ग्रन्थस्यास्यैकैव 60मातृका अत्र सरस्वतीमहाल्कोशागारे षट्त्रिंशत्तालपत्रेषु ग्रन्थाक्षरेण लिखिता उपलभ्यते। अस्यापरा मातृका अस्मद्देशे विराजमानेषु बहुषु कोशागारेषु कुत्रापि नोपलभ्यत इति तेषां सूचीतः अवगतम्। किन्तु अस्य61प्रतिकृतिः कर्गजपत्रे कवि-गोविन्दाचार्येण लिखिता अस्मिन् सरस्वतीमहाल्कोशागारे एव उपलभ्यते।

---

56 T. D. C. Vol. VII (Kavya) D. No. 4237-4238.
57 ,, ,, IX ,, 5304-5305.
58 मातृका T. D. C. Vol. XV D. Nos. 10957—10958.
59 ,, ,, ,, ,, 10959.
60 ,, ,, Vol. VII ,, 4251.
61 Transcribed Vol. No. 69.

ग्रन्थोऽयं द्विविधाकारेषु तालपत्रेषु लिखितो दृश्यते। प्रथमाकाराणां पत्राणां परिमाणं $14\frac{3}{4} \times 1\frac{1}{4}$ इंच्, द्वितीयकाराणां पत्राणां परिमाणं $9\frac{1}{8} \times 1\frac{1}{4}$ इंच् च भवति। प्रतिपुटं षट् अथवा सप्तपङ्क्तयः सन्ति। यद्यपि मातृकायामस्यां मध्ये मध्ये कीटभक्षितत्वात् क्वचिदक्षराणामस्फुटता, अक्षराणामभवश्च दृश्यते तथापि महता प्रयासेन यावच्छक्ति यथामति संपूरितम्।

ग्रन्थेऽस्मिन् नल्लाकविः, तुरुष्काणामुपद्रवेन पीडितान् स्वसोदरान् महीसुरान् दृष्ट्वा तप्यमानचेताः वाराणसीस्थं विश्वेश्वरं संप्रार्थ्य तद्वचनात् दक्षिणदेशे तञ्जापुरे विराजमानं विश्वेश्वरांशभूतं भोसलवंशावतंसं शाहक्षितिपमागत्य स्वखेदं विनिवेद्य शरणागतरक्षणदीक्षणेन राज्ञाऽपि मन्त्रिणां वचनानुसारं पूर्वमेव स्वसमीपमागतस्य औरङ्गजीब्सेनापतिना जुल्फिकर्खानेन चेञ्जीभूपस्थानात् च्यावितस्य शिवाजीपुत्रस्य 62राजारामस्य नेतृत्वे स्वसैन्यान् रथगजतुरगपदातिसमेतान् संप्रेष्य सर्वानपि म्लेच्छान् उन्मूलयामास। तेन परितुष्टो धर्मपुरुषः स्वाशिषा शाहभूपालमनुगृह्णन् चिरकालमखेलयत् तञ्जापुर्याम् इति चतुर्षु स्तबकेषु, न्यरूपयत्।

ग्रन्थमिमं मुद्रणाय स्वीकृत्य सम्पादनाय मह्यं दत्तवद्भ्यो पूर्वतनेभ्यः सरस्वतीमहालयाधिकारिवर्गेभ्यः, अद्य मुद्राप्य प्रकाशित-

---

62 'राजारामः शाहभूपसैन्यैस्सह चेञ्जीमध्ये तुरुष्कान् युद्धे उन्मूलयामास' इत्ययं विषयः शाहेन्द्रविलासेऽपि ६१तः ६४ श्लोकेषूपवर्णितः।

वद्भ्यः इदानींतनेभ्यः आधिकारिभ्यः, अस्य ग्रन्थस्य प्रकृशोधनं कृतवद्भ्यः सरस्वतीमहालपण्डितेभ्यश्च धन्यवादान् समर्पयामि ।

प्रमादमतिमान्द्यादिभिरत्र बहवो दोषाः संभाविताः स्युः तानविगणय्य निर्मत्सराः गुणैकपातिनो विद्वांसः गुणलेशसन्तुष्टास्सन्तः दासं अनुगृह्णन्त्विति सप्रश्रयमभ्यर्थये —

तिरुपतिः
17—05—1980.

इति सुधीजनविधेयः
डा. का. इ. गोविन्दः



# सङ्केतशब्दानां विवरणम्

| | | |
|---|---|---|
| अ र. म. | .... | अद्वैतरसमञ्जरी |
| अ. र. म. व्या. प. | .... | ,, व्याख्या परिमलः |
| कु. वि. ना | .... | कुशलवविजयनाटकम् |
| G. O. L | .... | Government Oriental Manuscripts Library, Madras. |
| जी. क. | .... | जीवन्मुक्तिकल्याणनाटकम् |
| T. D. C. | .... | Tanjore Maharaja Serfoji Sarasvati Mahal Library, Descriptive Catalogue. |
| ध. वि. च. | .... | धर्मविजयचम्पूः |
| नि. सा. | .... | निर्णयसागरप्रेस्-बम्बई |
| प. म. | .... | पदमणिमञ्जरी |
| शा. वि. प्र. स. श्लो. | .... | शाहेन्द्रविलासे प्रथमसर्गे श्लोकः |
| शा. वि. द्वि. स. श्लो. | .... | ,, द्वितीयसर्गे श्लोकः |
| शृ. स. भा. | .... | शृङ्गारसर्वस्वभाणः |
| ष. सि. सं. | .... | षड्दर्शनीसिद्धान्तसंग्रहः |



# கதைச் சுருக்கம்.

****

## முதல் ஸ்தபகம்.

முன்னோர்கள் செய்யும் முறைப்படி நூலாரம்பத்தில் இறை வணக்கமாக இராமபிரானைத் துதித்து, பிறகு இந்நூலின் நாயகனான சாஹஜி ராஜாவைப் புகழ்ந்து, தன் குருவான ராமபத்ர தீக்ஷிதரையும் வணங்கி நூலாசிரியனான தன்னையும் அறிமுகம் செய்துகொண்டு நூலைத் தொடங்குகிறார்.

பாரததேசத்தின் வடக்கே உள்ள காசியை மிக அழகாக வருணித்து அங்கு குடிகொண்டிருக்கும் அஷ்ட மூர்த்தியான விச்வனாதரை அர்ச்சித்து அவரிடம் தர்ம புருஷன் தன் கஷ்டத்தை விண்ணப்பித்துக்கொள்கிறார்.

எல்லோருடைய இதயத்திலும் குடிகொண்டிருப்பவனே, நீ உலகத்தை காப்பாற்றிக்கொண்டிருக்கும்பொழுது துஷ்டர்களான துருஷ்கர்கள் வேதங்களையும், யாகங்களையும், அந்தணர்களையும் துன்புறுத்துகிறார்கள். ஆகவே எங்குமே தர்மம் இருமல் போய்விட்டது. நீ இதைக் கண்டும் காணமல் இருப்பது ஏனே என்று மனமுருக ஸ்தோத்திரம் செய்கிறார்.

அந்த ஸ்தோத்திரத்தினல் உள்ளம் குளிர்ந்து இறைவன் துஷ்டர்களான துருஷ்கர்களை நாசம் செய்யவும், ஜனங்களைக் காக்கவும், என்னுடைய அம்சமாக சாஹஜி ராஜா என்பவன் போசல (சூரிய) வம்சத்தில் தோன்றி தஞ்சையில் ஆட்சிபுரிகின்றான் அவனிடம் செல், அவன் உனக்கு நன்மை செய்வான் என்று கூறினர்.

தர்ம புருஷனும் அப்பொழுதே அங்கிருந்து கிளம்பி அடவி வழியாகவும், புண்ணியநதி க்ஷேத்திரங்கள் மூலமாகவும் கோதாவரி நதியை அடைந்து அக்கரையில் காட்சிதரும் பத்ராசல கோதண்டராமனை ஸேவித்து, கிருஷ்ணை நதியைக்கடந்து, ஸ்ரீசைலத்திலுள்ள ஸ்வாமியை பூஜித்து, சுவர்ணமுகரி ஆற்றைக் கடந்து, காளஹஸ்தீச் வரரை வணங்கி, குசஸ்தலீ ஆற்றைக் கடந்து காஞ்சியை அடைந்து ஏகாம்பரநாதர், காமாக்ஷி இருவரையும் தரிசித்து, பம்பை-செய்யாறு பெண்ணை கடிலம் வெள்ளாறு முதலிய நதிகளைக்கடந்து, முக்திதரும் க்ஷேத்திரமான சிதம்பரத்தை அடைந்து, கனகசபாபதியை வணங்கி, கொள்ளிடம் வழியாகச்சென்று வைத்தீச்வரனையும் துதித்து, மிகஅழகாக வழிந்து ஓடிக்கொண்டிருக்கும் காவேரித்தாயை அர்ச்சித்து, அதன் கரையிலிருக்கும் தென்னை, வாழை முதலான மரங்களை வருணித்துக்கொண்டு, பண்டித சிரேஷ்டர்கள் வசிக்கும் ஏகராஜபுரத்தைக் கடந்து சோழதேசத்திற்கு அலங்கார மாக விளங்கும் சாஹராஜபுரத்தை (திருவிசைநல்லூர்) அடைகிறார். அங்கு குடிகொண்டிருக்கும் வியாகரணம், நியாயம், மீமாம்சை, வேதாந்தம் முதலான சாத்திரங்களை நன்கு அறிந்த வித்வான்கள் தங்கள் தங்கள் வீட்டுத் திண்ணையில் சிறுவர்களுக்கு வியாகரணம் முதலான சாத்திரங்களை கற்பிப்பதைக் கண்டு ஆனந்தம் அடைகிறார்.

## இரண்டாவது ஸ்தபகம்.

பிறகு தஞ்சைக்கு சமீபத்திலுள்ள வெண்ணாற்றங் கரையை அடைந்து, அதில் நீராடி, அதன் கரையில் குடிகொண்டு பக்தர்களுக்கு காட்சி அளிக்கும் உலக நாயகியான ஆநந்தவல்லி தேவியைப் பாடி தஞ்சையை அடைகிறார்.

அங்கு கோட்டையைச் சுற்றியுள்ள அகழியையும், கோட்டையையும், அதனுள்ளே இருக்கும் யானை, குதிரை, படைவீரர்கள், மக்கள் வசிக்கும் வீதி முதலானவைகளின் மேன்மையை வருணித்துக்கொண்டு மகிழ்ச்சி அடைகிறார்.

## மூன்றாவது ஸ்தபகம்.

அரண்மனை வாசலில் சாஹஜிராஜாவின் ஆணைக்குட்பட்டு ஆட்சிசெய்யுங் குறுநிலமன்னர்கள் சாஹபூபனின் தரிசனத்திற்காக தங்கள் தங்கள் தேர்களில் வந்துள்ளார்கள். அந்தத் தேர்களின் அழகையும், அவைகளால் எப்படி அரண்மனை விளங்குகிறது என்பதையும் வருணிக்கிறார்.

பிறகு அரண்மனையில் சாஹமஹாராஜாவின் பேட்டிக்காக ஏனைய குறுநிலமன்னர்கள் காத்துக்கிடப்பதையும், வைரவைடூரியங்களால் சித்திரிக்கப்பட்டுள்ளதாயும் இருக்கிற ராஜமந்திரத்தை வருணிக்கிறார்.

பிறகு பலவிதமான புஷ்பங்களாலும், அதன் மகரந்தத்திற்காக ரீங்காரத்துடன் செல்லும் வண்டுகளாலும், தென்றல்காற்றினாலும் நிரம்பியிருக்கிற தோட்டத்தை வருணிக்கிறார்.

பிறகு மிக உயர்ந்ததான மரகதம் முதலான கற்களால் நிர்மாணிக்கப்பட்ட ஆசனத்தில் வீற்றிருக்கும் சாஹ-மஹாராஜாவை அடைகிறார்.

உடனே அங்கு இருக்கும் கற்றறிந்த பெரியோர்களால் பஹுமானிக்கப்பட்ட அந்த தர்மபுருஷன் தன்னை வணங்குகிற சாஹமஹாராஜாலைப்பார்த்து எல்லா மக்களையும் குறைவொன்றுமிருமல் ஆட்சிசெய்க, உன்-

னுடைய பாத இருக்கையில் எல்லா குறுநில மன்னர்களுடைய தலைகளும் வணங்கட்டும், நீ உன் தகப்பனுரான ஏகோஜிக்குப் பிறந்தாற்போல உனக்கு ஒரு புதல்வன் உண்டாகுக என்று ஆசிர்வாதம் செய்கிறுர்.

இந்த ஆசிர்வாதத்தால் உளம்கனிந்த சாஹமஹாராஜன் அய்யன்மீர் தாங்கள் யார்? தங்கள் பெயர் என்ன, தாங்கள் எங்கு வசிக்கிறீர்கள், எனக்கு என்ன ஆணையிட வந்துள்ளீர்கள் என்று கேழ்க்கிறுன்.

இதனுல் மகிழ்ச்சி அடைந்த தர்மபுருஷன் வசிட்ட மஹர்ஷி வம்சத்திலுண்டான தர்மபுருஷன் என்கிற நான் துருஷ்கர்களால் இன்னலை அனுபவிக்கின்ற என்னுடைய உறவினர்களான அந்தணர்களின் ஆருத்துயர்கண்டு காசிநாயகனுன விச்வநாதனை உபாசித்து அவன் ஆணையால் உன்னைச் சரணம் அடைந்துள்ளேன். நீ துருஷ்கர்களை வதம்செய்து என்னுடைய துயரைப் போக்கக்கடவாய் என்று கூற சாஹஜியும் அவ்வாறே செய்கிறேம் என்று உறுதியளிக்கிறுர்.

## நான்காவது ஸ்தபகம்.

தனது தகப்பனுர் காலத்திலிருந்து பரம்பரையாக வரும் தன் அமைச்சர்களைக்கண்டு துயர்படும் இத்தர்ம புருஷனை காப்பதாக அபயம் அளித்துவிட்டேன், எப்படி காப்பாற்றலாம் என்று சாஹஜி கேழ்க்க, அமைச்சர்களும் சரணடைந்தவனை காத்தல் என்பது போசல (சூரிய) வம்சத்திற்கு தொன்றுதொட்டு வரும் மரபே, அதுபோல் நிரபராதிகளையும் தண்டிப்பதில்லை என்பதும் வழக்கமாகையால் ஏதாவது காரணத்தைக்கண்டு அதன் மூலமாக துஷ்டர்களை சிக்ஷிக்கவேண்டுகிறேம் என்று கூறினுர்கள்.

மந்திரிகளுள் ஒருவர் உன் உறவினனுன ராஜாராமனை துலுக்கர்கள் துன்புறுத்த நீயும் அவர்களை வென்று ராஜாராமனை செஞ்சியில் அபாயமிருமல் இருக்கச்செய்வ தாக வாக்களித்திருக்கிருய், ஆகையால் உன் வீரர்களை ராஜாராமனுடைய தலைமையில் அனுப்பி அவர்களை நாசம் செய்க என்று கூறினர். தன் மனதில் தோன்றிய அதே அபிப்ராயத்தை அமைச்சர்கள் கூறியதால் உவகையுடன் அவரைப் புகழ்ந்து தன் வீரர்களை ராஜாராமனுடன் செஞ்சிக்குச் செல்லும்படி பணித்தான்.

ராஜாராமனும் செஞ்சியில் துருஷ்கர்களை பயங்கர மான யுத்தத்தில் கொன்றுவிட்டான் என்பதை தூதன் மூலமாக சபையில் அறிந்து தர்மபுருஷனும் உனக்கு உன் போல் புதல்வன் உண்டாகுக என்று பலவாருக நல்வார்த்தைகள் கூறி தன் இருப்பிடம் செல்கிருன்.

பிறகு வெகுநாள் எக்குறையும் இன்றி தஞ்சையை ஆண்டுகொண்டிருந்தான்.

நூலின் முடிவிலும் இராமபிரானுடைய அருளால் சாஹஜி ராஜாவின் புகழ் ஓங்கட்டும் என்று மங்களத்துடன் முடிக்கிருர்.

ஸம்பாதகன்.



# धर्मविजयचम्पू विषयानुक्रमणिका

**

# सामान्यविषयसूचिका

## (GENERAL INDEX)

---



**

श्रीमते हयग्रीवाय नमः

भूमिनाथकविकृता

# ॥ धर्मविजयचम्पूः ॥

****

## ॥ प्रथमस्तबकः ॥

विबुधकुलसमृद्धिः सुस्थिरा येन क्लृप्ता
प्रणमदभयदाने यस्य दीक्षा प्रतीता ।
जनकनृपतिकन्याधन्यपार्श्वः स देवः
शहजिनरपतीन्दोः श्रेयसे भूयसेऽस्तु ॥ १ ॥

विश्वख्यातैकराजामितसुकृतपरीपाकभूतोऽनुतश्रीः
कौसल्यायामिवाभूत् रघुकुलतिलको योऽत्र दीपाम्बिकायाम् ।
स श्रीमद्भोसलाख्यामलकुलजलधेरिन्दुरिन्धानतेज-
स्सान्द्रश्शाहावनीन्द्रो जगति विजयतां मूर्तिमान्
राजधर्मः ॥ २ ॥

रामभद्रचरणारविन्दयो -
राश्रयप्रबलितश्चिकीर्षति ।
भूमिनाथकविचक्रवर्त्यसौ
शाहधर्मविजयोचितसाहसम् ॥ ३ ॥

अस्माभिः पञ्चविंशे वयसि मदवशे पण्डितम्मन्यमुख्यै-
स्तत्ताद्दक्षातिचित्रक्रमकवनपथव्यापृथैस्तापितासि ।
तत्पुण्यश्लोकशाहाधिपचरितसुधापूरगाढावगाहै-
र्निश्शेषं यातु शान्तिं भुवनजननि वाग्देवि मे सम्प्रसीद
॥ ४ ॥

इच्छामात्रात्त्रयमिदमुपानम्रतां याति येषां
हृद्योल्लेखः सरलरचना कोमलं संविधानम् ।
आचन्द्रार्कं सरसकवयः क्षेममेते भजन्तः
पृथ्वीचक्रं कुकविनिहतं शश्वदुज्जीवयन्तु ॥ ५ ॥

शङ्कासङ्कुलमीरितैस्सुमहता यत्नेन पद्याधमैः
द्वित्रैरेव दुरन्वयैः प्रतिमुहुर्विस्मृत्य चेतोधृतैः ।
भूयो वश्यगिरां महामतिमतामुद्गीर्णकर्णज्वरैः
श्रेयस्त्वानुचितं भजन्ति कतिचित् धिङ्मूर्खभावं विधेः
॥ ६ ॥

साहित्यरत्नकोशाय
शब्दब्रह्मस्वरूपिणे ।
रामभद्राय मखिने
रामभक्त्यब्धये नमः ॥ ७ ॥

इह खलु निखिललोकपावनगङ्गातरङ्गशीकरनिकरोत्किरसमीरकिशोरापनुद्यमानरतान्तश्रान्तिभिः उद्दामसौन्दर्यसम्पदभिदर्पितान्तःकरणैः तरुणैः अहर्निशमभिशोभिनेन शारदशशाङ्कमण्डलसहोदरेण रम्यतरेण हर्म्यसहस्रेण परिष्कृतां, अन्नपूर्णाम्बिकानुकम्पासम्पादितपरिपोषणसुस्थतरपौरपरिभासुरां, युवजनरतान्तानन्दमूर्च्छावसरेष्वपि तारकमन्त्रोपदेशव्यग्रस्य भगवतो विश्वनाथस्य सान्निध्यसातत्यादनन्यसामान्यधन्यताधुरन्धरां, वाराणसीमधिगम्यपरितः प्रसृतयवनजालहालाहलगरलगुरुपरिप्लोषितो, निजानुभवमात्रसंसूच्यमानमहिमा, धर्मपुरुषः कालकूटनिग्रहसमुदग्रशक्तिसमग्रं, विश्रुतागण्यकारुण्यभरं, विश्वेश्वरं शरणीकरणीयं अवधार्य निगमान्तसन्ततिप्रशस्तगुणस्तोमं तं इत्थं प्रार्थयत— ॥ १ ॥

दधतमुरसि निस्तुलां विशाले
गिरितनयाकुचकुङ्कुमाङ्कशोभाम् ।
तुहिनकरकलाविलासिमौलिं
शरणमहं कलयामि विश्वनाथम् ॥ ८ ॥

प्रणतिपरसमस्तदेवमौलि-
स्फुरितकिरीटमहामणिप्रभाभिः ।
विलसितनिजपादपुण्डरीकं
शरणमहं कलयामि विश्वनाथम् ॥ ९ ॥

मुनिहृदयसरोजचञ्चरीकं
भवपरितापदवाग्निवारिवाहम् ।
चरणविनतलोकपारिजातं
शरणमहं कलयामि विश्वनाथम् ॥ १० ॥

निखिलनिगममूर्धमृग्यमेकं
जगति वचोमनसोरतीव दूरम् ।
बहुविधजगदात्मना स्फुरन्तं
शरणमहं कलयामि विश्वनाथम् ॥ ११ ॥

तृष्णां वारयते, हवींषि वहते, श्रौतक्रियास्तन्वते,
कोकान् मोदयते, जगत् सुखयते, तद्वैभवं बिभ्रते ।
गन्धं धर्मयते, मृगं हययते, सृष्टिं स्थितिं संहृतिं
कुर्वाणाय नमोऽष्टमूर्तय इदं भूयात् त्रिमूर्त्यात्मने ॥ १२ ॥

इति प्रपत्त्या प्रणत्या च विरचितसान्निध्यं सोऽयमेवं सर्वज्ञं व्यज्ञापयत — स्वामिन् अधुना किल सकललोकनाथे त्वयि जागरूकेऽ-

प्यञ्चरान् विध्वंसयता, वेदघोषं विशोषयता, पुण्यतीर्थानि कदर्थयता, क्षेत्राणि परित्रासयता, महादेवान् परिदेवयता, चित्रगुप्तपरगण्डनाप्यविस्तरवर्णनीयपापनिलयेन, तुच्छेतामपि, म्लेच्छपतिना तिरश्चामपि दयनीयां ईदृशीं दशामुपगमितं विजानन्नपि मां सकलान्तर्यामिन् निजालयाप्याग्रनप्यविचारयन् कथमुपेक्ष्यमाण एवाष्टमूर्ते वर्तसे ॥ २ ॥

तत्तेन दुर्विनीतेन

तप्यमानाः प्रजा इमाः ।

कारुण्यामृतवर्षेण सिञ्च

मां च दयस्व भोः ॥ १३ ॥

इति ।

ततः प्रसन्नः प्रमथाधिनाथः

कारुण्यनिष्यन्दिकटाक्षपातः ।

आनन्दयत् तं वचनैर्गभीरैः

यथा मयूरं रसितैः पयोदः ॥ १४ ॥

अद्य किल साक्षात्कलेरुत्तमावतारस्यम्लेच्छपतेर्निरासेच्छया सकलप्रजापरिरक्षणविचक्षणो धरणिमवतीर्णो महांश एव भोसलवंशं परिष्कुर्वन् सर्वसद्गुणरत्नरत्नाकरः शाहमहाराजोनाम मञ्जुतरविनिवेशसमञ्चितां तञ्जानगरीमधिवसति ॥ ३ ॥

तद्विपादमिमं मुञ्च
चञ्चलेतरमानसः ।
भज राजवरेण्यं
तमन्तरा नैव ते गतिः ॥ १५ ॥

इत्युदितवता प्रहितो जगत्प्रभुणा, तत्क्षणमेव प्रस्थितः चिरकाल-परिचयवशेन दुस्त्यजमप्यार्यावर्तमपगतसज्जनवार्तं कथं कथञ्चिदतिवाह्य च स्तम्भितबाष्पाम्भः प्रसरः, प्रतिपदं यवनसञ्चरणप्रपञ्चितभीतिः, पुण्यतीर्थक्षेत्र-धर्मारण्यादिमार्गेण तिरोहिताकृतिः मन्दमन्दमागच्छन्, व्यतीत्य नदीवरां गोदावरीं, तदीयतटनिकटे, नित्यसन्निहितं भक्तजनाभीष्टदानधुरन्धरं परं धाम कोदण्डमण्डितभुजदण्डं नत्वा, स्तुत्वा, ध्यात्वा च विधिवन्निजहृदय-कमलकुहरे, विलङ्घितकृष्णासिन्धुः, निषेवितश्रीशैलपतिः, समुत्तीर्य तूर्णं सुवर्णमुखरीं, आराधितकालहस्तिनाथो, व्यतीतः कुशस्थलीं, काञ्चीनायक-मेकाम्रविभुं, कामाक्षीं च पराशक्तिमभिवन्द्य, कम्पा बाहु-सरित्पिनाकिनी-गरुडापगा-श्वेतनदीः क्रमेणातिक्रम्य, पवित्रं विमुक्तिक्षेत्रं चिदम्बरमासाद्य, वेदान्तविद्यावेद्यं कनकसभाविभुं परमात्मानमात्मनि भावयन्, उत्तरकावेरी-मुत्तीर्य, शाहमहीक्षिता सुरक्षितामखिलकरणसमाह्लादिनीमासीदन् महनीयां चोलमहीम्, सोऽयं प्रपन्नवैद्येश्वरः, सहचधरणीधरकीर्तिपताकां, निजसपत्न्यां यमुनायामसूययेव सकललोकपापनिकरनिराकरणेन तद्भ्रातुर्विवस्वत्तनयस्याधि-कारभ्रंशमापादयन्तीं, तीरानोकहनिवहविगलितकुसुमपालिभिस्तरङ्गसङ्गवलि-भङ्गैस्तीरद्वयनीलशिलासंपानसन्ततिकान्तिसन्दोहसङ्क्रान्तप्रवाहनैल्येन च चोलधरणीवेणीविलासमुल्लासयन्तीं, निर्मलसलिलबिम्बितनीलजलधरपटल-

कलङ्कितनिजतलावलोकनादङ्कुरितपङ्कशङ्कानां कथञ्चिदप्याधोरणप्रेरणकृता-
वतरणानां शाहजिराजवेतण्डप्रकाण्डानां मज्जनकेलिसङ्कलितैर्मदजलासारैरधि-
वासितां, राजनीतिचतुरेण भोंसलकुलावतंसेन राजन्वति चोलराष्ट्रे नित्य-
मुदितनिरन्तरनीरविहारपरतरुणीजनव्यावल्गत्कुचकुलाचलप्रक्षोभपरिप्रेङ्खित-
तुङ्गतरङ्गसङ्घसङ्कुलां, स्वपयः परिपोषिततया तीरमहीरुहैर्मातृगौरवादिव
विकीर्णपुष्पनिकरैः फलभरवहनामहनापदेशेन विनमितशिरोभिरभिसेवितां,
स्वर्वीचीशीकरासारचोरसमीरकिशोरसंस्पर्शनेन निजदर्शनेन चाशेषकिल्बिष
विशोषणात् केवलं सकलजननिर्णेजनमात्रलम्भितकूलसलिलां, चतुर्दशविद्या-
नवद्यब्राह्मणरूपतया देवेषु शाहमहीमहेन्द्रेण सुरक्ष्यमाणां, त्रिदिवादपि स्पृहणीय-
तरसौभाग्यां, चोलभुवं समवतीर्य ग्रामरूपान् विमानानध्यासितेषु तदीयपानोचितां
सुधामिव प्रवहन्तीं, अपत्यनिर्विशेषमात्मपरिरक्षितानां शाहराजराष्ट्रवासिनाम-
मित्रभयमङ्क्षु निहन्तुमिव तरङ्गहस्तविधूनितायतमीनकृपाणां, प्रतिपदविवर्तिता-
वर्तखेटां, विजृम्भितसङ्कुलतरङ्गघोषपरिक्ष्वेलितां स्वर्गसमाधिरोहणसोपानराजि
हृदयग्रन्थिनिकर्तनकर्तरीं, दुरवगाहवेदान्तकान्तारदीपिकां, मोक्षद्वारकवाटिकोद्-
घाटनकुञ्चिकां, शाहनृपरिपुनृपसेनामिव मेदुरमाधुरीधरां, तदीयभुजामिव
सत्तरवारिशोभितां, पिनाकिवेद्यमाहात्म्यामप्यपिनाकिवेद्यमाहात्म्यां, कवित-
तिहारिणीमप्यकविततिहारिणीं, सकलमोहकारिणीमपि सकलमोहनिवारिणीं,
वाङ्मनसातिभूमिवैभवां, कावेरीमर्चतिस्म विच्यूतानन्दाश्रुमकरन्दाभ्यां
विलोचनारविन्दाभ्याम् ॥ ४ ॥

यस्यामजस्रं सरसान्तरायां
सक्तेऽनुवेलं सरितामधीशे ।

अन्यास्तटिन्यो भुवि सन्त्वसङ्ख्याः
सैवास्ति गङ्गाविरहेण पाण्डुः ॥ १६ ॥

तदनु तस्यां मथितदुरितसार्थे मायूरतीर्थे यथाविधि कृताभिषवणो धर्मपुत्रोऽयमभिवन्दितचन्द्रचूडचरणारविन्दः प्रकम्पनपरिकम्पितशाखाकशाग्रताडनैरेव दिनकरतुरगप्रचोदनया विश्राणितारुणसारथ्यायासविश्रान्तिसुखानां, पालिकाकोटिपरिविद्धसुधाकरबिम्बविनिस्सृतैः तन्मार्गेणैव समाश्च्योतनादन्तरभिलीनैरमृतैरिवमधुरतरैः सलिलैः परिपूरितेन फलभरेण विवर्धितकामिनीकुचस्पर्धानां, परस्परपरिघटितशाखापटलकायमानस्याधारस्तम्भशोभामभिजृम्भयतां, भोसलकुलपतिविद्वज्जनानुष्ठीयमानमखपरम्परासु निर्जरनिकरगतागतोपायभूतानां, निरन्तरनिपतितपरिणम्रफलजालदन्तुरीकृतान्तरमूलभागानां, कोटरगतकीरमधुरतरविरुतामृतानि श्रुतिपुटाभ्यामापिबद्भिः प्रच्छाय शीतलेमूलतले सुस्निग्धकोमलशाड्वलशय्यामधिशयानैः अध्वश्रमविश्रान्तिमन्थरपान्थनिकरैः सादरकटाक्षपातं प्रशस्यमानसौभाग्यानां, नालिकेराणम् ॥ ५ ॥

सुरभिलकुसुमपालीविगलितबालकदलीदलान्तरालसरणिकुल्याप्रवाहिबहलमकरन्दरसपूरपरिपूरितालवालानां, अभङ्गुरमधुमदसङ्क्रमितझाङ्कारकैतवेन मधुरतरनिजमधुरसप्रशंसामुखरस्य मधुकरनिकरस्य निस्स्वनितसारस्यमुद्दिश्य मन्दगन्धवहस्पन्दिताग्रतया शिरःकम्पमिव संप्रदर्शयन्तीनां, मन्दमारुतविलोलविशालकोमलमरतकशिलाफलकरुचिरदलान्तरालविनिषण्णफलास्वादप्रमदतरलितशुकदम्पतिसमनुभूयमानडोलाविभ्रमपरिभ्राजितानन्ददामतारुण्य-

मदशरण्यानिरगण्यमहिमशाहधरणीपपुण्यतरचरितगीतिनिनादिनीभिः शालिगोपसुन्दरीभिः सविलाससमासेवितस्निग्धश्यामलमहेक्षुप्रतिवलयपरिमण्डितानां, कदलीनाम् ॥ ६ ॥

जलधरनिकरप्रत्यादेशप्रस्निग्धपरिसान्द्रनिजाभोगसन्दर्शनसन्ततसन्तुष्टशिखण्डिमण्डलप्रचण्डीकृतताण्डवेन किसलयचर्वणगर्वितबालकोकिलप्रपञ्चितालापचन्द्रिकाकोलाहलेन मकरन्दमन्दचञ्चलचञ्चरीकसङ्घझङ्कृतिसङ्गीतसम्पदा च निखिलतलसार्वभौमतां प्रकटयतां मकरन्दमन्दधारानिष्यन्दनेन लोलम्बनिकुरुम्बनिबिडतया च गन्धसिन्धुरश्रियमाश्रयतां सलीलसञ्चरणतरुणसारङ्गखुरपुटविदलितपतितपरिणम्रफलभरप्रसृतरसप्रसराक्रूपीकृतमूलदेशानां समुदग्रनिजाग्रसुरभिलकुसुमस्तबकपरागसमधिवासितवियदापगासलिलानां समीरकिशोरसनुल्ललिततरुणपल्लवाङ्गुलिव्यापारैरातपकथानभिज्ञे मन्दानिलवलनकमनीये निजतले मदनविलासाकलनाय युवजनाह्वानमिव वितन्वतां आकन्दानामितरेषामपि महीरुहां काननैरलङ्कृतां, अलङ्कृतिं जम्बूद्वीपस्य, खनिं विद्वत्कविरत्नानां, प्रतिसृष्टिं त्रिविष्टपस्य, महोत्सवपरिणतिं पश्यज्जनदृशामावसथं प्रशस्तसमस्तवस्तूनामगोचरं वचसामुच्चावचसौभाग्यधुरन्धरां चोलवसुन्धरां पर्यटन् अविन्दत महान्तमन्तरानन्दम् ॥ ७ ॥

समेधिनानाविधसस्यभासुरां
सुरक्षितां शाहनरेश्वरेण याम् ।
कृषीवलस्त्रीनयनाम्बुजार्चितां
त्रिरेकमासस्य घनोऽभिवर्षति ॥ १७ ॥

अरत्निमात्रैः परिपाकपाण्डुरी-
कृताखिलाशैः कणिशैर्विनम्रिताः ।
अतीव शाल्यः परिशोभयन्ति यां
महार्हभूषा इव दिव्यसुन्दरीम् ॥ १८ ॥

यस्यां अतिप्रशस्तवैभवानि, अमितकुसुमभरनमितनानाविधतरुलतानिलीनमधुकरारावविराविते: अभ्रंलिहपरिस्निग्धमरतकमेचकमन्दमारुतापूरितमधुरस्वरसुषिरकीचकपरिवृतैः परितोऽपि देवोद्यानैरुपविलसितानि, कुहचन महति मण्डपान्तरे माणवकाधीयमाननमकचमकनिनदमुखरितहरिन्मुखैः अन्यत्र विविधागमव्याख्यानविसृमरघोषपरिघोषितैः अन्यत्र देवानुध्याननियमितहृदयनिरुद्धनिश्वसितपरमशिवयोगिपरिशोभितैः इतरत्र देवापदानसमुपवीणनपरवैपञ्चिकगीतामृतरसास्वादप्रसितनिश्चलीकृताङ्गदेवसारङ्गपोतकदर्शनीयतरैः नटनपटुनटीचटुलचरणरणितमणिमञ्जीरानुनादमेदुरैः देवसन्निधिसमुदीर्यमाणशाहवसुन्धरापुरन्दरविजयाशीःपरम्परैः नभोविलङ्घनजाङ्घिकदीप्रप्राकारवलयैः अध्यासितमध्यपरिपावितानि, गिरिराजकुमारिकाविलुलोकयिषासमागतकुलाचलविलासकरस्यन्दनवृन्दसुन्दरितरथ्यानि, पदे पदे विभान्ति पवित्राणि, क्षेत्राणि ॥ ८ ॥

यस्यां महान्त्यावसतां स्थलानि
द्वेष्यो न षड्वर्गत ईषदन्यः ।
काङ्क्ष्यो न मोक्षादितरः पुमर्थः
सेव्यो न चान्यस्तरुणेन्दुमौलेः ॥ १९ ॥

या किल सकलविद्यावीरुद्वलम्बनविद्वज्जनसुरतरुक्षीरसागरैः, चतुष्पथ-परिमिलितलीलालोलबालककुलगीयमानकलमधुरशाहमहाराजविजयप्रशस्ति-समास्वादनासावधानपरिस्मेरविदग्धजनसार्थपरिष्कृतैः, प्रावृषेण्यपयोधराद्वैत-वियत्तलविसृमरवेताग्निधूमस्तोमसमवलोकहर्षभरतरलितमण्डलीकृतकलाप-तरुणकलापिलास्यपरिष्कृतनिष्कुटवनसमञ्चितैः, महाकविवर्ण्यमानभोंसलवंशा-वतंसपावनतरचरितप्रशस्तिरसायनसेवनानन्दमन्थरान्तरविपुलबहिर्वेदिकामिलित पण्डितप्रकाण्डपरिमण्डितैः, अमरपुरसुन्दरीसौन्दर्यगर्वसर्वङ्कषपुष्पापचायिवर-वर्णिनीकमनीयदेहकान्तिसन्दोहधवलितसौदामिनीरुचिपुञ्जपिञ्जरितनीलजल-धरसहोदरारामसहीरुहोल्लसितैःअश्रान्तोत्सवशालिभिः, अनाश्रितसङ्ख्यायोगैः, अखिलसौभाग्यसमग्रैः, अग्रहारैः अलङ्क्रियते ॥ १९ ॥

प्रत्यग्रहारं प्रमदेन यस्यां
शाहाधिराजस्य शुभं चरित्रम् ।
जनाः स्तुवन्तोऽनुगृहं महान्तं
क्षिपन्ति कालं क्षणतुल्यमेव ॥ २० ॥

यस्यां समञ्चितवागुम्भप्रपञ्चितवैदुषीविशेषच्छात्रजनच्छलदिक्तटप्रतिष्ठापि-तजैत्रध्वजैः, महाफलनिदानचतुर्दशविद्यावीरुदुपघ्नभूरुहैः, षट्कर्मानुष्ठानान-लाधिष्ठितवसिष्ठादिमुनिवरिष्ठैः, बृहस्पतिप्रत्यादेशैः, आदिशेषप्रतिनिधिभिः, सत्कविकाव्यैरिव पुण्यश्लोकैः. पुराणजालैरिव सभारतैः, शाहराजचरितैरिव

सदामोदिभिः, सङ्ख्यावद्भिरप्यसङ्ख्यैः सद्वेषैरप्यद्वेषैः समदान्तैरप्यसम-दान्तैः, पण्डितप्रकाण्डैः, परिमण्डितं एकराजपुरमिति प्रशस्तं चकास्तितराम् ॥ १० ॥

यां नित्यं लालयत्युच्चैः
कुर्वन् मृदुकरग्रहम् ।
सुदृशां लालने दक्षः
शाहभूमिपुरन्दरः ॥ २१ ॥

तामेतामतृप्तिमता नयनयुगलेन बहुमानयन् असौ धर्मपुरुषः परिक्रम्य क्रमेण निषेवितनिखिलपुण्यक्षेत्रः विलोचनरसायनीकृताभिरूपतराग्रहारपरम्परः कुतूहलेन चोलमहीमहनीयभूषणायमानं(नां) शाहराजपुरमुपगम्य सम्यगानन्दादन्तर[अमन्तानन्ददन्तुर] एवमचिन्तयत् ॥ ११ ॥

मन्दस्पन्दिदलोल्लसत्फलभरव्यानम्ररम्भावनो-
खेलद्बालशुकानुकारितबुधव्याख्यानवाक्यक्रमः ।
एषोऽशेषमिदं निरस्य सहसा मदैन्यमन्यादृशं
हन्तानन्दभरं तनोति विबुधग्रामोऽभिरामो हृदि ॥ २२ ॥

विद्वत्सहस्रपरिपुष्टसमस्तविद्या-
घोषेण भित्तिषु दिशां मुखरीकृतेन ।
एकेन्द्रनन्दनयशोजयडिण्डिमाख्या
व्याख्यायते हि मुहुरत्र महाग्रहारे ॥ २३ ॥

अयमखिललोकप्रशंसाप्रथमपदमग्रहारः स्वयमुचितज्ञशेखरेण शाह-महेन्द्रेण नानादिगन्तरतःक्रमेण सप्रयत्नमुपानीतैरुज्ज्वलतरतेजश्शालिभिः त्रासलेशरहितैः सुवृत्तैः अत्यर्घपात्रभूतैः सकलसुजनाभिनन्दनीयैः विद्वन्मणिभिरभिगुम्भितः चोलपरिष्कारो हारः ॥ १२ ॥

इहत्यविद्वद्वरवाङ्निगुम्भान्
गङ्गा यदन्वञ्चति वीचिवेगैः ।
तन्नित्यमत्यादरणेन धत्ते
सर्वज्ञ एनां शिव उत्तमाङ्गे ॥ २४ ॥

अत्र खलु विचित्रतरचरित्रपवित्रीकृतधरित्रीतलाः सकलविद्यास्वनवद्यवैशद्यहृद्यामतिमन्तोऽन्तेवासिजनमध्यापयन्तो निश्चलवृत्तयो विराजितः परिष्कुर्वते वहिर्वेदिम् ॥ १३ ॥

स किल जगति शेषः ख्यातमेधाविशेषः
पटुवदनसहस्रेणैव यं व्याचकार ।
विशदयति मुखेनैकेन सर्वं तमर्थं
करबदरमिवासौ देशिकः शाब्दिकानाम् ॥ २५ ॥

चिन्तामणिप्रभृतिभूरिगभीरभाव-
ग्रन्थान्तरस्थघनवाक्यशिलाविभेदान् ।
वाक्चन्द्रिकाविसरणैः सरसीकरोति
नैय्यायिकेन्दुरिह सैष जगत्प्रकाशः ॥ २६ ॥

श्रुतिवचनगोचराभि-
वाग्धाटीभिर्निरर्गलाभिरसौ ।
मीमांसतेऽध्वरमहो
जैमिनिरिव मूर्तिमानितो धीमान् ॥ २७ ॥

वेदान्तविन्ध्यविपिने
दुरासदे मन्दवैभवैरितरैः ।
विहरति विद्वत्सिंह-
स्तदीयवृन्दैर्निदानमित एषः ॥ २८ ॥

अधुना किल नानादिगन्तवास्तव्यागन्तुकपण्डितजनशिरःकम्पाभिनन्द्यमानकर्कशमहाग्रन्थमर्मभेदनालंकर्मीणविबुधकुञ्जरसमञ्चितः, शिष्यजनप्रतिज्ञाप्रक्रान्तवक्त्रेतरवादाटोपविकटभ्रुकुटीविलोकनविस्मेरोदहारतरुणीविवलितमुखचन्द्रमञ्जुलरुचिपुञ्जरञ्जितवीथ्यन्तरः, व्यवहारपरिच्छेदनेच्छासमागतजानपदजनविवादानुयोगचटुलकक्षपुटन्यस्तपुस्तकमाणवकविराजितच्छालजनविजृम्भितमान्यतरोपन्यासविलेखनकृतोद्योगसमागतवैदेशिकग्रन्थकृत्सूरिनिचिरीसः, महाकविवितीर्णभोसलवंशावतंसयशःप्रशस्तिसमस्यापूरणाहमहमिकाप्रवृत्यासक्तनानाविधोल्लेखसमाहितच्छात्रजनपरिस्तिमितमुखावलोकनानन्दमन्थरान्तरविद्वद्बृन्दः, कदलीपट्टमिथ्यापुस्तकहस्तनाटितशिष्यभावसवयःपरिवृतव्याख्यातृताभिनयकमनीयानुपनतचतुरबालकविलसितविद्वद्गृहबहिर्वेदिकाकोणः, कोशगृहं सारस्वतसर्वस्वस्य, जन्मभूमिः श्रौतस्मार्तकर्माचरणस्य, समु-

च्चाटनमन्त्रः कलिमहाग्रहस्य, कीर्तिपताका शाहसार्वभौमस्य, सकलसद्गुण-
समग्रोऽयं विद्वद्ग्रामः प्राप्तो मम दिष्ट्या दृष्टिगोचरताम् ॥ १४ ॥

अत्राद्य विद्वत्कविवर्णितानि
शाहावनीन्दोश्चरितामृतानि ।
कृत्वा मुहुः कर्णरसायनं श्वो
गन्तास्मि तं राजवरं वरेण्यम् ॥ २९ ॥

इति श्रीमद्विश्वविदितभोसलकुलपयोधिसम्भवशहजिराजसन्दर्शनमात्रसमुद्वेल-
कृतसारस्वतसागरस्य नल्लादीक्षितस्य कृतौ धर्मविजये
प्रथमस्स्तबकः ॥

**

॥ अथ द्वितीयस्तबकः ॥

अथ कविवचःपुष्पैर्गन्धोत्तरैरधिवासितं
सुचरितसुधापूरं शाहप्रभोर्बुधजीवनम् ।
श्रुतियुगपुटेनास्वाद्यानन्दबन्धुरितान्तरः
स कुतुकमसौ धर्मस्तञ्जापुरीं समुपागमत् ॥ १ ॥

सोऽयं नागरिकयुवतिशतवारिविहारपरिमृष्टपराार्घ्यकुचकस्तूरिकालेपसुरभिलायां, समीरणविकीर्णसमुदग्रतरङ्गहस्तसमुत्सारिततीरतरुकुसुमनिकरपरिष्कारितविमलविशालपुलिनायां मज्जनसमवतारितशाहजिराजगजपरम्पराभिनवसेतुतार्यमाणगच्छदागच्छज्जानपदपौरजनतायां विण्णापगायां कृतसमुचितकरणीयः सङ्गृहीतनगरोपवनविविधसुगन्धिकुसुमोपहारो जगदेकजनन्याः पराशक्तेः आनन्दवल्ल्याः निजैकान्तभक्ते शाहनृपतावतिवत्सलतया तञ्जापुरीपरिपालनजागरूकाया महनीयमालयं मणिमण्डपपरिमण्डितं समाससाद ॥ १ ॥

तत्रायमतिमात्रभक्तिभिराक्रान्तो दण्डवदग्रे प्रणिपत्य सत्वरमुपहारविरचिताभ्यर्चनो वाक्यकुसुमैरपि जगदम्बामेवमर्चति स्म विस्मयेन ॥ २ ॥

हृदयकरुणासिन्धोर्वात्सल्यसारसमाहृताः
शिशिरशिशिरा वीचीमालाः कटाक्षरुचीमिषाः ।
सपदि किरती मातस्सन्तापदीनमिमं जनं
भुवनजननि श्रीमत्यानन्दवल्लि उपलालय ॥ २ ॥

प्रणतजनताभीष्टप्रस्तावकल्पलतां सतां
मुनिजनमनःपद्माख्याखेलहंसवधूयिताम् ।
कथमपि मुहुः श्रुत्यन्तान्विष्टमेदुरवैभवां
जननि भवतीं दृष्ट्वा दिष्ट्या कृतार्थतरा वयम् ॥ ३ ॥

[अखिलभुवनी] विद्यासर्वस्वकोशगृहाद्गुरो-
रनुपधिमहाशुश्रूषासम्प्रसादितचेतसः ।
जननि वचनैर्गङ्गातोयैर्विधौतमले मन-
स्यखिलविपदुत्तीर्णैः धन्यस्य भासि सुनिश्चला ॥ ४ ॥

तदनु तदनुध्यानमहिमकृतसन्निधाना संप्रसादपरिविकस्वरवदनसुधाकर-बिम्बा जगदम्बा धर्मपुरुषमाह्लादयन्ती मधुरमधुरामतिगभीरमन्द्रतरस्वरसम्पदा सूक्तिसुधामेवमाविष्कृतवती ॥ ३ ॥

अहं जाने सर्वं तव कलिबलेनाकुलमते
तदद्य त्वं शाहक्षितिपमुपयाहि प्रभुमणिम् ।
स दत्वा ते श्रीमानभयमरिदर्पं शमयिता
त्यजामन्दां चिन्तां हृदि निहितविश्वेशवचनः ॥ ५ ॥

एवं दयारससमाप्लावितहृदयया सकलभुवनजनन्या प्रोत्साहितोऽयं दक्षिणाक्षिपरिस्पन्देन परैरमन्दैरितरैरपि निमित्तशतैरुत्तालितप्रमोदसागरः प्रवि-

शति स्म विस्मयावहां सुकृतजनभोग्यसौभाग्यां अनितरपुरसाधारणमञ्जुतर-विनिवेशां तञ्जानगरीम् ॥ ४ ॥

सा किल त्रिशङ्कटतटनिबद्धमुग्धनीलशिलासोपाननिरर्गलविनिर्गलद-मितरुचिधारापरिरञ्जनसञ्जनितनीलोत्पलार्द्रीतकमलकल्हारकुमुदविशेषाभिव्य-ञ्जनधुरन्धरतत्तद्गन्धबन्धुरितदिगन्तरेण, शुकोदररुचिसोदरविस्तीर्णकमलिनी-पर्णैः मरकतशकलैरिव समास्तीर्णेन, पद्मिनीपलसिंहासनाधिरूढैः उद्दण्डशत-पलातपत्रसेवितैः मन्थरतरवीचीमारुतकारितव्यजनवीजनव्यापारैः शफर-परिक्षोभसमुच्चलितनिर्मलसलिलपूरमिषाचामरविराजितैः प्रकटितराजहंसभावैः राजहंसैः अभिसेवितेन, परिक्रीडनातुङ्गतरमतङ्गजविलोलनैः मन्दरगिरि-मथ्यमानसागरदशामभिनयता, मत्तमधुकरक्लृप्तयुवजनचित्तधृतिहरसत्तरगान-श्रवणसमुन्मिषितमिवानन्दाश्रुप्रसरं मकरन्दमावहद्भिः विरहिजनव्यथन-मङ्कुरितमिव कलङ्कं भृशमुद्वहद्भिः विलाससदनकामिनीवदनसौन्दर्यचौर्या-पराधेनेव जलाधिवासं प्रापितैः उद्दामयौवनपौरसुन्दरीमुखचन्द्रामन्दरामणीयक-परिलिप्सयेव तपस्यद्भिः अधिसलिलं सुमुखीमुखशोभापरिभूतं आत्मानं त्यक्तुमिव सलिलप्रविष्टैः मकरन्दमिषताम्बूलरसपरिपूरितैः कलाचिकापात्रैरिव मदनमहीपतेः शातकुम्भसम्भूतैर्यानपात्रैरिव जलविहारलोलायाः कमलाया-मकरन्दकापिशायनपानचषकैरिव मधुकरनिकरस्य शाहमहीपतिहृदयव्यापारैरिव सूर्यालोकविकासिभिः तदीयचरितैरिव दोषोल्लासरहितैः तत्परिपन्थिवसुन्ध-राधिपैरिव सदावनसमाश्रितैः मान्यैरप्यवमान्यैः कुवलयामोदकारिभिरपि दूरीकृतकुवलयामोदैः समैरप्यसमैः सरसीरुहैरलङ्कृतेन, सारसकारण्डव-चक्रवाकराजहंसमांसलव्वनितदत्तहस्तावलम्बतुङ्गतरतरङ्गसङ्घसङ्घोषपधिरीकृत-

परस्पराभिनयसंसूचिताभिधेयतटनिविष्टतरुणलोककुतूहलदरीदृश्यमानजलविहगमिथुनजालविलाससमुल्लासितेन, विमलजलप्रतिबिम्बितसालवलयविलिखितवैसारिणग्रहणपर्यायासप्रतारिततया परमार्थमीनसमुपसर्पणेऽपि सम्भाविततूष्णींभावबकोटकोटिचित्रीकृतेन, शाहवसुन्धरापुरन्दरहृदयेनेव गभीरेण, तदीयचरितेनेव विमलेन, तद्यशसेव वैशाल्यशालिना, अपरिमेयकमलेनापि कमललेशरहितेन, भङ्गबहुलेनाप्यनवगतभङ्गेन, वननिधिरिति वर्णितेनापि नवनिधिरिति परिकीर्तितेन परिखावलयेन परिवेष्टिता ॥ ५ ॥

प्रत्यर्थिपार्थिवशिरोमणिकान्तिपूर-
नीराजिताङ्घ्रिशहजीन्द्रभुजाभिगुप्ता ।
उद्दामसौधरुचिवीचिभिराहसन्ती
संरक्षितां मघवता सुरराजधानीम् ॥ ६ ॥

कथञ्चिदपि निकुञ्चितपर्यायस्तमस्तकसहस्रमालसंप्लुतिपरिक्लिष्टदृष्टिविंशतिकमात्मसन्धारितां वसुन्धरां लीलयैव शुण्डालशुण्डादण्डपिचण्डिलभुजाग्रे परिबिभ्रतमदभ्रशौर्यधुर्यवराहवसुन्धरापुरन्दरमासेवितुमापातालपरिसृतपरिखासलिलसरणिसमागतेन कुण्डलीभूतेनेव कुण्डलिपरिवृढेन, समुदितसन्ततमसमविदितार्कचन्द्रमसमत्याभोगं स्वपाश्चात्यभागं प्राच्यतरैः प्रतापतेजःप्रसरैः उच्चकैश्चकासयन्तं एकनरेन्द्रनन्दनमभिवन्दितुमागतेनेव लोकालोकशिलोच्चयेन, समुन्नतिसमुल्लासेन, स्वप्रतिमल्लान् सौल्यतल्लजान् जिगीषया समावेष्टयतेव सुपर्वपर्वतेन, सौधमहायोगियोगपट्टशङ्कामङ्कुरयता चोलधरणी-

तरुणीरत्नखचितकर्णाभरणकनकपट्टायमानेन, दक्षिणदिशि नित्यसन्निहितं संस्तम्भितविन्ध्यवसुन्धराधरदम्भं कुम्भसम्भवं सम्भावयितुमभिलिहच्चापि गगनतलं चन्द्रसूर्यसरणिनिरोधवैयात्यं परित्यजता, निखिलक्षोणिधरपक्षपरिशिक्षणविचक्षणादमराध्यक्षादुद्विग्नैः जगदेकवीरस्य शाहनरपतेः अभिसम्पादयितुमनुकम्पासम्पदं उपसेवाकृते कृतनिश्चयैः परिहृतसागरसमाधिवासक्लेशैर्धराधरैरिव विततपक्षसदृक्षप्रान्तप्राकारभागैः अतिदृढविनिवेशैः अट्टालदेशैः परिपन्थिजनविमोहनमभिजृम्भिता शक्रसमविक्रमस्य भोसलकुलपतेः महामहिमवतः परैर्दुरासदतया केवलमट्टालकुट्टिमशोभामात्रोपयोगैः शतघ्नीनलिकपाशयन्त्रप्रमुखैः प्रहरणोपकरणैः परितः परिशोभिनेन, नदीप्रकारप्राकारमण्डलेन परिमण्डिता ॥ ६ ॥

स्वर्णभूधरवर्णनोक्त्यवकर्णना सह गोपुरै
रग्रखेलदुदग्रगानसमग्रचारणकिन्नरैः ।
सुन्दरीप्रतिमायुताधिकसुन्दरैर्जितसन्दरै -
रञ्चिता मणिपुञ्जितद्युतिरञ्जिताखिलदिक्तटैः ॥ ७ ॥

दुरन्तगगननिरन्तरसञ्चरणसमुदञ्चदायासभरदिवाकरतुरगविश्रमविश्राणनधुरीणमदधारागन्धप्रबन्धबन्धुरतरकर्णतालानिलैः, विपुलश्रुतियुगलतालवृन्तव्यजनवीजनाभिरुपचारितायाः मस्तकस्थलमधिवसन्त्याः राजलक्ष्म्याः सपर्यापूर्णकुम्भडम्बरालम्बनलम्पटाभ्यां कुम्भाभ्यामभिसम्भृतशोभैः, शुण्डादण्डायमननलिनगुलिकायमानवमथुशीकरनिकरैः, उन्नम्रमस्तकसौधस्थलविहरमाणराजश्रीसमुल्लासितहल्लीसङ्कोचितस्फाटिकदण्डायमानदन्तकुन्दयुगलैः,

शाहमनुजेन्द्रनिस्तन्द्रप्रतापप्रशस्तिवर्णनावलीविभ्रमावहमदहूदिनीपरिलीनलोलम्बकुरुम्बैः औदार्यमैत्रीप्रत्यासत्त्या शाहचक्रवर्तिसमुपश्लोकनाय धरणिसञ्चरैरिव जलधरैः, दानवारि परिवर्षद्भिः, कनककक्ष्यातटिल्लताल्लसितैः, सुधाविधौतसमुदग्रतरविनिवेशदर्शनीयं भोसलाधिपतिमणिसौधं शैलाधिराजधिया निषेवितुमुपागतैरिव महीधरैः, दानधारानिर्झरविमेदुरैः, करकुम्भगमनसमाचरितकामिन्यूरुपयोधरविलासयानकामनीयकस्तेयापराधेनेव कनकाम्बुजसंयमितैः शाहमहीपतिगुणैरिव महोन्नतैः, तदीयभटैरिव विधूतजयश्रीघण्टैः, तत्कोशैरिव सदा नव्यायतिभिः, महावारणैरप्यवारणैः, विराजमानैरप्यविराजमानैः, ससादिभिरप्यसादिभिः, मददन्तिभिः निरन्तरा ॥ ७ ॥

शाहभूपनृसिंहस्य
सिंहस्येव गिरेर्गुहा ।
वसतिः परमोदारा
परैरतिदुरासदा ॥ ८ ॥

उदग्रतरकनकमयकेतुदण्डकोटिपरिलोलवेलमिषेण नभसि धावितुं समुद्यम्य पुनरलङ्कृत्य लक्षीकरणशीलयेव विनिर्वर्तिभिः, दुर्जातनिजवेगमात्रसम्भृतनिर्भरदम्भविजृम्भणस्य पुरन्दरतुरगस्य परिहासायेव चलाचलोष्ठपुटप्रकटितदन्तपङ्क्तिभिः अस्मदीयधाटीविलसितस्य भूवलयमेतावदेव किलेति संज्ञापयितुमिव शश्वदुपदर्शितमण्डलीकरणकेलिभिः, अत्यर्धशिरश्चामरोपचरितराजलक्ष्मीसिंहासनायमानकल्याणपल्ययनसमुल्लसितैः, अवतारैः गरुडस्य

मूर्तिभिः मरुतां, विवर्तैर्मनसो मुनिजनमानसैरिव दृढीकृतात्मसुखलीनैः, शादराज-राष्ट्रवर्तिभिरिव सततमनिषिद्धचारिभिः, नदीप्रवाहैरिव दर्शनीयावर्तशोभितैः, अर्वप्रवेकैरप्यनर्वभिः, आरोहवश्यैरप्यारोहभ्रंशकरैः, उन्नतैरप्यपण्डितैः, तुरङ्गमैः सङ्कुला ॥ ८ ॥

उपहृतनवहयमदकरिनिकर-
स्फुरदुरुमणिगणकनकसदुपदैः ।
शहजिधरणिपतिचरणनतिपरैः
दिशि दिशि नृपतिभिरतिनिबिडतरा ॥ ९ ॥

उद्दण्डभुजदण्डसमरकण्डूनिर्णोदनचणान् प्रतिभटप्राणसमीरणपारण-प्रकटितभुजगभावान् अतिचपलविजयलक्ष्मीविनियमनवेत्रदण्डान् आद-धानैः, विजयलक्ष्मीभ्रूविभ्रमैकागारिकचण्डकोदण्डपरिमण्डितपाणिभिः, विजय-सर्वस्वकोशसदनायमाननिषङ्गालङ्कारितविशङ्कटसुदृढस्कन्धपीठैः, उद्वेल-प्रतापानलसमिन्धनधमनीयमाननलीकैः, परसेनापारावारविहारकच्छपायितवि-शङ्कटखेटकैः, विजयेन्दिराभिसरणसमुचितमेचकवसनावकुण्ठनविलासावहवर्म-परिकर्मितैः, प्रतापहुतवहनिर्यदवार्यधूमरेखिकां विजयेन्दिरासुन्दरवेणिकां दुस्तरसमरसागरनिस्तरणद्रोणीं महनीयकीर्तिवधूटिकाघटनपटुतरसञ्चारिकां निस्त्रिंशलतां अजस्रं अजहद्भिः विशुद्धशिक्षापुरस्सरं विधृतैरन्यैरन्यैरपि मान्यैः, प्रहरणैः, उज्ज्वलद्भिः, प्रत्नवीररत्नदुरन्तपराक्रमोदन्तं परस्परतः सम्भृत-शिरःकम्पमुपशृण्वद्भिः, संयमिभिरिव परित्यक्तदेहाभिमानैः, आहिताग्निभिरिव

समित्कामैः, देवसैन्यैरिव स्वाभ्युदयैकतानैः, स्वाभाविकगुणधर्मोल्लसितैरप्य-रोपितगुणधर्मोल्लसितैः, विधुतारहितैरपि कुवलयशोभाकरैः, महादोषोपेतैरपि दोषलेशवर्जितैः, वीरप्रकाण्डैः परिमण्डिता ॥ ९ ॥

बुधजनवन्द्योः शुभगुणसिन्धोः
नृपनयविन्दोः शहजिमहीन्दोः ।
उपचितमोदा बुधजनवादा -
वसरनिनादाद्विहितविनोदा ॥ १० ॥

निरन्तरगृहपङ्क्तिकूलद्वयसहिताभिः, उपरिपरिदृश्यमानधवलोष्णीष-फेनसङ्कुलनिबिडसञ्चरदमितजनसङ्घप्रवाहाभिः, अन्तरान्तरा शुण्डार-गण्डशैलमण्डिताभिः, धाराग्रतिचतुरतरतुरगवीचिनिचिताभिः, महापगा-शोभामाक्षिपन्तीभिः, क्वचन शाहमहीपतिविलासागमनकारणेन हिमाम्बु-संसिक्तभूतलाभिः, समुच्छ्रितकनकपताकाभिः, आयतमणितोरणाभिः, अपरत्र कल्याणहेतोर्विहितविततवितानलसन्निरूपमानकायमानाभिः, समा-स्तीर्णविचित्रसोपधानमहास्तरणाभिः, चित्तहारिनृत्तगीतमधुराभिः, एकत्र वेदिकानिषण्णविबुधसमाजशिरःकम्पसमुपश्लाघितसङ्गीतकलाकुशलवैणिकोप-वीणितशाहमहाराजकीर्तिवर्णनाकर्णनेन निश्चलीकृतचित्रलिखितायमानसा-माजिकजनमनोहराभिः, अन्यत्र चतुर्दशविद्यापारावारपारदृश्वविदितविद्वज्जन-व्याख्यानघोषमुखरिताभिः, इतरत्र महानैगमसमूहीकृतहेमगिरिप्रचण्डगण्ड-कविशङ्काकरदीनारराशिसमुद्यदुद्योतविद्युदभिद्योतितवाताभ्रमीभिः, अर्जुनचित्त-

वृत्तिभिरिव सदाशुभद्रोल्लसिताभिः, उद्यानभूमिभिरिव नानागमप्रचरणचणद्विजनादमेदुराभिः, शाहनरपतिकविभणितिभिरिव कोमलवर्णक्रमशोभिताभिः, वदान्यजनाधिष्ठिताभिरप्यवदान्यजनाधिष्ठिताभिः, अयजनवर्जिता इत्युदिताभिरप्यनयजनवर्जिताभिः, समहर्षिजनाभिरप्यसमहर्षिजनाभिः, विशालदीर्घाभिः, अमिताभिः, वीथीविभक्तिभिरभिशोभिता ॥ १० ॥

चञ्चत्कोकिलपञ्चमप्रसरणोदञ्चन्मनोरञ्जने-
ष्वारामेषु सुगन्धिमन्दमरुदान्दोलोल्लसद्वल्लिषु ।
कीर्तीं रेकनरेन्द्रनन्दनमहीचन्द्रस्य मन्दस्वरं
गायद्भिस्तरुणैर्जितेन्द्रनगरीदम्भा भृशं भासिता ॥ ११ ॥

विस्मेरविलोचनवृद्धजननिरीक्षणक्षणसमुपसंश्रियमाणचत्वरसमुदित्वरबालकवैतानिकप्रयोगानुकरणकोलाहलैः, यजमानमधुरस्वराह्वानसमुपगतकण्डूयमाननमितकन्धररोमन्थमन्थरहोमधेनुभिः, पत्नीकरयुगलसप्रयत्नसमुत्सार्यमाणनिर्भरोपलालननिर्भयदर्भग्रहणव्यग्रवत्सतरीचापलसमुल्लसितैः, तत्कालसमुपगतश्रौतदेशिकसमुपदिश्यमानप्रयोगनिर्णयसमाकर्णनोपशमितपरस्पराटोपशिष्यसङ्घसङ्कुलैः, हविर्ग्रहणसमागत्वरामरनिकरनिश्रेणिश्रीविडम्बनलम्पटाम्बरपरिचुम्बिहोमधूमस्तोमैः, सविधसञ्चरत्पौरजनसमुच्छ्वासिनासिकापुटपरिपीयमानबहुलहविष्परिमलैः, हव्यसमादित्सासमुपेतबृन्दारकबृन्दसन्देहसन्दानधुरन्धरामन्दभक्तिनिस्पन्दनयनसदस्यसान्द्रितविशालतराभिशालपवित्रितैः, निष्कुटकुटीरकीरकिशोरसमुदीरिताश्रावय अस्तुश्रौषण्निनादमेदुरैः अपनयद्भिरघौघं,

उपनयद्भिश्चित्तशुद्धिं, विलसद्भिः समित्कुशसङ्ग्रहेण, विहसद्भिः ब्रह्मभवनं, महद्भिरग्निहोत्रश्रोत्रियगृहैः निबिडा, निवसतिरद्भुतानां, रङ्गभूमिः मङ्गलदेवतायाः, खनिरनघा महार्घरत्नानां, अगोचरः सकलकविगिरां, कामिनीमध्ययष्टिरिव काञ्चीशोभाहारिणी भोसलेन्द्रसेनेव नित्यमत्ययं भ्या तदीयवाणीव सततमतिमधुरा विहतविशालाभिरूप्याप्यविभूतविशालाभिरूप्या निन्दितराजराजवसतिरप्यनिन्दितराजराजवसतिः अतिजितकाशिकाप्यनतिजितकाशिका समुदितसकलकल्याणगुणपुञ्जा तञ्जानगरी महातिथिं धर्मपुरुषमाप्याययदतिमात्रं नेत्रपरिपेयेन मधुरेण कामनीयकामृतपूरेण ॥ ११ ॥

यस्यां निर्मलहर्म्यरम्यशिखरोल्लीढान्तरिक्षान्तराः
पुष्यन्निष्कुटभूरुहभ्रमदलोझङ्कारशृङ्गारिताः ।
सङ्गीताङ्गमृदङ्गमङ्गलरवाटोपोन्नटद्बर्हिणाः
शोभन्ते धनिनां गृहाः प्रतिपदं शुभ्रा मणिभ्राजिताः ॥ १२ ॥

इति श्रीमद्विश्वविदितभोसलकुलपयोधिशहजिराजचन्द्रसन्दर्शनमात्रसमुद्वेलीकृत-
सारस्वतसागरस्य नल्लादीक्षितस्य कृतौ धर्मविजये
द्वितीयस्तबकः ॥

**

## ॥ अथ तृतीयस्तबकः ॥

गृहे गृहे शाहमहीरुहेन्दोः
गायत्सु पौरेषु यशो गरीयः ।
केतुव्रजैः पल्लवितैरिवाग्रे
भान्ती मणीकान्त्यरुणांशुजालैः ॥ १ ॥

मृषाविशेषसमालोचनाकुशलकतिपयकविकल्पितनिजसादृश्यसम्पद्दुरवलिप्तस्य परमोच्चस्य उच्चैःश्रवसो जनयितारं सागरममर्षेण परिशोषयितुमिव सततचञ्चलखुराञ्चलसंक्षुण्णवसुमतीसमुत्थापितसरळधूलीपटलैः कादाचित्कसमुद्धतिसमुन्मेषितपूर्वचरणप्रोन्नमनकैतवेन दिवाकरतुरगविकिरद्व्रातविजयविधूनितपताकिकादुकूलैः अकालेऽपि विहायसि शारदनीरदशोभामापादयद्भिः विचित्रसौवर्णवितानविघटितकिङ्किणीवादमहार्घमुक्तागुच्छस्पृहणीयविद्रुमस्तबकपरम्परासुषमाव्यतिकरकमनीयैः शातकुम्भस्तम्भप्रत्युप्तप्रशस्यमणिगणनिर्मर्यादविनिर्यन्मसृणघृणिनिकरेण प्रतिदिशमपि रथाङ्गमिथुनानां विश्लेषखेदानवबोधं दधानैः अतिचतुरशिल्पिपरिकल्पितशुकशारिकामयूरचकोरकोकिलकलविङ्कमुखसुन्दरतरपतगद्वंद्वविलसितैः अखिलयुवलोकविलोचनानि मुष्णद्भिः अनिर्भरगर्भितघर्घरेण रथाङ्गनिर्घोषसमुन्मेषणेन प्रतिकलमकाण्ड एव शिखण्डिमण्डलस्य ताण्डवोपदेशदेशिकतां विवादयद्भिः विमाननिरुपमानतादुरवलेपदूरीकरणचणवेलाविलङ्घिरानर्गायकैः उच्चण्डकेतुदण्डमणि-

किङ्किणीश्रेणीरवपरम्परामधुरमेदुरनिनादसान्द्रितसोमपानचन्द्रशालाभ्यन्तरैः युवतिजनैरिव मनोहरद्भिः वासुदेवव्यापारैरिव विजयवृद्धिकरैः सत्कविप्रबन्धैरिव सुवृत्तचक्रशालिभिः परास्तरणैरप्यपरास्तरणैः चतुरङ्गश्रेष्ठैरपि शताङ्गवरिष्ठैः गदादिप्रहरणाङ्कितैरप्यगदादिप्रहरणाङ्कितैः अमन्दैः स्यन्दनैः सान्द्रीकृता ॥ १ ॥

तस्याश्च चोलमहीमहिलामणिपताकायमानाया मध्ये नायकरत्नमिव भासुरं दौवारिककरकलितकनकवेत्रप्रहारातिमात्रपरित्रुटितमकुटिकोटसमुत्पतितनभोविकीर्णमुक्तामणिगणद्विगुणिततारकनिकरैरुपदाकारणसमानीतप्रचण्डवेतण्डमण्डलगण्डतलनिरर्गलनिर्गलितमदजलासारसेकपरिशाम्यदुपदातुरङ्गसङ्घखुरसङ्घर्षणसमुत्थबहुलधूलीपालिभिः सरभसाभ्युत्थानसविनयाञ्जलिबन्धनसम्पादितानुकम्पासम्मदार्द्रीकृतहृदयायाधिकारिजनाय पदे पदे किञ्चित्किञ्चिदाकर्णयते स्वल्पं जल्पतेति तदीयभुजिष्यागिरा सभयातिशयं सङ्ग्रहेण चिराय शाहमहाराजचरणारविन्दद्वन्द्वसेवामहोत्सवावसरं प्रतीक्षमाणा वयमास्महे इति विज्ञापयद्भिः "अत्रोपविशत" "तत्रोपविशत" इति द्वारभूपतिनियुक्तात्युद्भटभटजनस्य तीक्ष्णतराक्षरमभीक्ष्णमुक्त्या, स्थानाव्यवस्थासमुत्थदुरवस्थादुःस्थैः महाराजस्य युद्धसन्नद्धां उद्धतामप्रतिषिद्धां सेनां दूरादेव विलोक्य विनिर्यन्मनोधैर्यैः चरणपतितस्तूर्णमङ्गाधिपोऽयं, युद्धमध्ये निबद्धाञ्जलिमभ्यारूढविनयो वङ्गपतिरयं, बहुधा विधाय साधुतरमायोधनमधिगतपराजयो निरायुधकिरीटं दण्डवत्प्रणिपतितो दयालुना महाराजेन पुनः

प्रतिष्ठापितः कलिङ्गनाथोऽयमित्यादिसमुद्धतसेनापत्यनुचरभटवचनाकर्णनेन समालक्षिता क्षाममन्दाक्षवैलक्ष्यैः सामन्तनरेन्द्रसन्दोहैः सान्द्रितप्रान्तेन मणिगणखचितशातकुम्भस्तम्भसम्भृतशोभागुम्भितरम्भादिदम्भसंस्तम्भकाले-ख्याम्भोरुहाक्षीमण्डलपरिमण्डितपार्श्वद्वयमण्डपोल्लसितेन मरतकशिलाकलितल-सदलिस्यन्दमानामन्दकान्तिसन्दोहाङ्कुरितस्वच्छशुकसच्छायीकृतगच्छदाग-च्छज्जननिकरचरणेन शिल्पिपरिकल्पितसमुद्धृतकरधारितकनकघटघ-टितकरटियुगशोभितोभयभागविमलकमलसमलङ्कृतकोमलकरकमलकमला-विलसितोपरिभागेन प्रथमद्वारेण समुदञ्चितशोभाप्रपञ्चं इतस्ततो विकीर्ण-मणिगणदन्तुरितान्तरविमलविशालस्फटिकशिलाकलितभूतलाभिः अभ्रं-लिहशुभ्रतरविभ्राजमान-सौधाग्रसम्भृताकालिकशारदाभ्रविभ्रमाभिः व्याकीर्ण-शुभवर्णकुङ्कुमकर्पूरेण द्विगुणीकरणचणारामनिर्गतमन्थरगन्धवहानन्तकुसुमप-रागपूरिताभिः मुष्णतीभिः पश्यज्जनविलोचनानि पुष्णतीभिः निरतिश-यानन्दसन्दोहं नयनसहस्रलक्ष्याभिः नानाकक्ष्याभिरतिप्रेक्ष्यं मञ्जुतरकन-कपञ्जरकिरणपुञ्जरञ्जनपिञ्जरीभूतकेलिशुकप्रपञ्चितैः "भोसलकुलाब्धिचन्द्र, भूलोकदेवेन्द्र, दीपाम्बाभाग्यवर्य दीप्तप्रतापसूर्य शरदः शतञ्जीव कविभोज शाहमहाराजेति" वचनरचनैः समुद्भूताद्भुतोल्लासेन विकीर्णमुक्ताविद्रुम-पद्मरागवज्रवैदूर्यनिर्यदवार्यप्रभाप्रकरातिमात्रचित्रितमहानीलशिलाकलितविशङ्क-टतराङ्कणतलेन कामिनीकरतालनिर्मितमण्डलीकृतबर्हकेलिशिखण्डिमण्डितेन विततपीताम्बरवितानविलम्बमानसमानमुक्तागुच्छफुल्लमल्लिकासरसमुल्लसितशात-कुम्भस्तम्भकल्पितानल्पसौन्दर्यसुन्दरीप्रतिमास्पृहणीयनिर्जितनिर्जरविमानाभि-

मानजगदण्डमण्डनायितमण्डपेन समुदग्ररम्यहर्म्याग्रकान्तिमद्रै जयन्तीपटगन्ध-वहसन्दलितारविन्दबन्धुतुरगवर्गमार्गायासेन सुधाधवलसौधचामीकरग-वाक्षमार्गनिर्गतसुकेशीकेशपरिष्कारागरुधूमस्तोमघुमुघुमायितदशदिशावकाशेन सङ्गीतभङ्गीचणवराङ्गीजनरचितवीणावेणुमुरजमर्दलमृदङ्गमङ्गलारावमेदुरेण प्रशस्तनिस्तुलातिस्तुतिसमस्तवस्तुस्तोमैः समृद्धेन विशुद्धेन शुद्धान्तेन विवृद्धशोभं प्रत्यादेशं महेन्द्रभवनस्य, महोत्सवं पश्यज्जनदृशां, निवसतिं सौभाग्यस्य, केलिगृहं कमलायाः, प्रभातनभस्तलमिवासद्दक्षप्रकाशं अव्युत्पन्न-जनशब्दजालमिव कोशप्रमाणातीतं, सत्कविकाव्यमिव नानालङ्कारशोभितं, अधिकारिनिबिडमप्यधिकारिदुरासदं, नीतिमज्जनाधिष्ठितमप्यनीतिमज्जना-धिष्ठितं धीरहितमप्यधीरहितं प्राविशत् धर्मपुरुषः तं लोकयसुन्दरं राजमन्दिरम् ॥ २ ॥

यस्मिन्नुदग्रसौधाग्र -
मन्दिरेन्द्रशिलांशुभिः ।
रञ्जितेऽपि शरद्यभ्रे
नृत्यन्त्युद्यानकेकिनः ॥ ३ ॥

यस्यान्तरे मन्थरतरगन्धवहसमान्दोलनमन्दमास्यन्दमानबालकिसल-याङ्गुलिभिः अदभ्रमधुमदविभ्रमद्भ्रमरविभ्राजितारावगानविभ्रमाभिशोभि-ताभिः स्यन्दमानमकरन्दबिन्दुसन्दोहसन्दर्शितबाष्पस्यन्दनसौन्दर्याभिव्यञ्जित-

मञ्जुतरकोमलमुकुलवृन्ददन्तपङ्क्तिभिः अभिनयपटुभिरिव नटीभिः वल्लरी-भिरुल्लसितं तुहिनकरकरनिकरव्यतिकरनिस्सरदतिशिशिरवारिपूरपरिपूरित-सेचनायासदूरीकरणचणसुन्दरचन्द्रकान्ताकलितालवालवलयैः विहरमाणतरु-णीजनरतिरभसविश्लथहारविगलितविकीर्णमुक्ताफलविलसितमूलतलैः कोकिल-जालकोलाहलाविशदालापविलसितकलिततया प्रकम्पनसम्पादितकम्पसम्प-दवलम्बनेन किसलयकिरणारुणिमकुसुमविलासहाससमेततया च बिभ्रद्भिः मधुमत्तविभ्रमं किसलयाधारस्तबकपयोधरामन्दमरुदान्दोलनाद्वेपमाना इव मौग्ध्येन व्रततीर्युवतीरालिङ्ग्य मकरन्दस्वेदमेदुरीकृतविटपभुजैः तालतमाल-सालरसालतक्कोलाङ्कोलकपित्थाश्वत्थकुन्दचन्दनकोविदारकर्णिकारवञ्जुलवकु-लार्जुनखर्जूररसालचम्पकादिभिरनेकैरनोकहैरलङ्कृतं यौवनमदगभीरगामि-कामिनीचरणयावकाङ्कसमलङ्कृतेन मलयजपङ्ककुङ्कुमकस्तूरीकर्पूरबन्धुर-गन्धसान्द्रितविलासिजनशय्यातलगुञ्जन्मधुकरपुञ्जं मञ्जुलीकृतोपरितलेन फलभरनमितहरितकोमलविलोलदलपालिकदलीराजिपरिवृतेन हंससारसच-क्रवाकप्रमुखजलचरविहगसमूहमेदुरनिनदप्रतिध्वनिमुखरीकृततटनिकुञ्जेन विकचपङ्कजपरागपालिसमधिवासितमरन्दनिष्यन्दद्विगुणितमाधुर्यविमलशीतल-सलिलशालिना जलकेलिलोलविलासिनीकुचकलशसङ्घर्षरिङ्खत्तुङ्गतरतरङ्ग-सङ्घसङ्कुलेन दुर्वहस्तनजघनभारनितान्ततान्तजलक्रीडाश्रान्तहस्तविलासिनी-जनक्षणाद्ध्यास्यमानमध्यगतमणिमयमण्डपेन लीलासरसासुन्दरतरीकृतान्तरं निर्जितनन्दनं तर्जितचैत्ररथं शरकोशगृहं मदनमहावीरस्य, सिद्धिक्षेत्रं कामोपनि-षत्परिचयस्य, विमोहनं मुनीनामपि, शाहनृपतेर्हृदयमिव सरससुमनोनिकरा-

मोदितं तस्य पवित्रं चरित्रमिव सदाशुकविजृम्भितवाक्यपरिष्कृतं तस्य विलास-गतप्रमदकुञ्जराजितं मन्दप्रभञ्जनमनोहरमप्यमन्दप्रभञ्जनमनोहरं नितान्तरत-रागास्पदमप्यनितान्तरतरागास्पदं समानतलताञ्चितमप्यसमानतलताञ्चितं विलोचनोत्सवनिदानं विभाति महोद्यानम् ॥ ४ ॥

यत्रान्तःपुरमन्दिरे निशि रतिश्रान्ता गवाक्षान्तर-
क्रान्तोद्यानवनान्तमारुतहृतस्वेदाम्बुमुक्तागणाः ।
प्रातः प्रत्यहमत्यमन्दसरसीहंसारवामेदुरैः
सङ्गीतध्वनितैः भजन्ति मधुरैः बोधं कुरङ्गीदृशः
॥ ४ ॥

यत्किल सकलजननयनानन्दनमहमहमिकापतितसामन्तनरेन्द्रवृन्द-मौलिमणिगणकिरणसन्दोहसन्ततनीराजितसुन्दरचरणद्वन्द्वोऽयमेकराजनन्दनः शाहनृपसंक्रन्दनः प्रकामबन्धुरं सुधासिन्धोरान्तरं मणिद्वीपमिन्दिरासख इवा-रविन्दलोचनः परिष्कुरुते ॥ ५ ॥

तस्य च परिहसितसुरराजभवनस्य परिष्करणायमानायां शातकुम्भस्त-म्भरुचिनिकुरुम्बगुम्फिततटिल्लताद्युतिघटितकालाम्बुदविडम्बिनीलशिलाभित्ति-दत्तशोभातिशयायां स्फटिकतलप्रत्युप्तमणिगणघृणिरञ्जनविचित्रवर्णीकृतसकल-जनभासुरायां तरुणलीलाशुककोमलतरोदररुचिनिकररूपितमरतकमयायितका-

ञ्चनपञ्जरशतसमञ्चितायां मरतकपञ्जररुचिरञ्जितशुकशोभामञ्जुलकेलिमराल-शिशुचाटुवचनोपदेशचतुलमुग्ध जनावलोकनसञ्जनितस्मितमधुरमुखविचक्षण-कृतलक्षणायां शलाकान्तराललम्बिविद्रुमनीलमानन्दयन्तं अनुचारमतिचतुर-चारनिवेदितनिखिलजानपदशुभवार्तासमाकर्णनैरानन्दबन्धुरितान्तरङ्गं मूर्तिमिव प्रजासुकृतस्तोमस्य, विवर्तमिव राजधर्मस्य, परिपाकमिवैकराजागण्यपुण्यनिकरस्य, विहारसौधं राज्यश्रियः, विलासोद्यानं सरस्वत्या, आवासं गुणगणानामाश्रयं सौजन्यस्यानिर्वचनीयमहिमानं भोसलवंशावतंसं नयनसहस्रदृश्यं अपश्यत् धर्मपुरुषः ॥ ६ ॥

अत्र स्थितैः सपदि वैदिकवृद्धवर्यै-
रभ्युत्थितैः बहुमतः सुफलोपहारी ।
सोऽयं कृतप्रणतये क्षितिपाय हर्षा-
दाशीर्वचांस्यभिमतार्थकराण्यवादीत् ॥ ५ ॥

वर्षाणि जीव शतमत्र निजैश्चरित्रै-
राह्लादयन्नवनिमण्डलमप्यशेषम् ।
नम्रावनीशशतमौलिमणिप्रभाभि-
र्विभ्राजतामनुकलं तव पादपीठम् ॥ ६ ॥

नाथे त्वयि प्रकृतयः सततानुरक्ताः
सन्त्वेकराज इव सद्गुणरत्नसिन्धौ ।
लोकोत्तरस्त्वमिव तस्य तवापि भूयात्
पुत्रः सुकीर्तिरिह शाहमहीमहेन्द्र ॥ ७ ॥

इति तदाशिषः सविनयमादाय स्वहस्तनिर्दिष्टे विष्टरे समुपविष्टमेनं एवमतिमधुरमन्वयुङ्क्त भोसलकुलावतंसः । "भगवन् अत्रभवता जननेन को नु वंशः परिष्कृतः? नामधेयतया का नु वर्णावली सफला? निवासतया के वा देशः परिपावितः? केन वा निदेशेनास्माननुग्रहीतु मिहागमनम्?" इति ॥ ७ ॥

प्रश्नेन तादृशा हृष्टः
पृथिवीपाकशासितुः ।
अशेषमपि वक्तव्य-
मवदत् धर्मपूरुषः ॥ ८ ॥

अहं किल नृपवरिष्ठ वसिष्ठर्षिसन्ततिसमुद्भूतो धर्मो नाम स्वदेशे ह्यार्यावर्ते म्लेच्छसार्थकदर्थितान् निजबन्धून् ब्राह्मणानालोक्य खिद्यमानमानस उपासनकृतसान्निध्यविश्वेशनिदेशेन यवनसंहरणनिपुणं शरणमागतोऽस्मि भवन्तं दयावन्तम् । किं बहुना ॥ ८ ॥

म्लेच्छानां युधि विसृतैरसृक्प्रवाहै -
स्तद्योषिन्नयनविमुक्तबाष्पपूरैः ।
शोकाग्निं शमय दुरन्तमान्तरं मे
दीनानां शरण जगत्त्रयैकवीर ॥ ९ ॥

एवं मञ्जुवचःप्रपञ्चितनिजातङ्काय शङ्कां विना
तस्मै विस्मयनीयदिव्यमहसे प्रीत्या प्रदायाऽभयम् ।
आलोकिष्ट मुखान्यथैष परितः सिंहासनं मन्त्रिणां
तद्भावावगमे समुत्सुकमना भूमण्डलाखण्डलः
॥ १० ॥

इत्यभिनवभोजराजशाहमहीमहेन्द्रसुन्दरमुखचन्द्रसन्दर्शनभहिमसान्द्रीकृतवाग्विलासस्य
रामभद्राध्वरिवरप्रियशिष्यस्य तदीयवंशजन्मनो भूमिनाथविद्वत्कवेः कृतौ
धर्मविजये तृतीयस्तबकः ॥

**

|| अथ चतुर्थस्तबकः ||

ततो निजादेशवचःश्रवोन्मुखा-
नसावमात्यान् स्वकुलक्रमागतान् ।
प्रसन्नगम्भीरमिदं वचोऽब्रवीत्
सुधाप्रवाहोपमितं मिताक्षरम् || १ ||

इहाऽभयं त्वरितमिदं मयेरितं
विषादिनं प्रति किल धर्मपूरुषम् ।
अमुष्य निर्वहणविधौ निगद्यतां
भवन्मतं शुभमयि नीतिवेदिनः || २ ||

इति मन्थरतरं परिपृष्टाः प्रहृष्टाऽन्तरा मन्त्रिणो वाचमेवमवोचन्— 'महाराज ! विदितमेव खलु जगति "शरणागताभयप्रदानं भोसलकुलस्य व्रतमि"ति । तदिदमनालोच्याभयप्रदानमपि महाराजं शोभयति । किं तु स्वामिनं प्रति साक्षान्निरपराधेषु यवनेषु कथमिदं निर्वहणीयमिति हृदयमन्तः परिप्लवते । भोसलकुलप्रसूता हि निरपराधे जने न कदाचिदपि क्रौर्यमवलम्बन्ते । विशेषेण राजनीतिचतुरो महाराजः । तत्कञ्चिदपराधमन्विष्य यवनदण्डनमुचितम्' || १ ||

इति निगद्य गिरं नयवर्त्मना
हृदि नितान्तविचिन्तिषु मन्त्रिषु ।
अवददद्भुतयुक्तिपरिष्कृतं
सपदि कश्चन मन्त्रिवरो वचः ॥ ३ ॥

महाराज साधुतरमेव संमन्त्रितमिदमेतैः नीतिज्ञैः । अहं तु यथामति किंचिदावेदयामि – राजारामाय दत्तमेवाभयं तत्रभवता । तस्य चापकारिभिः म्लेच्छैः परम्परया महाराजं प्रत्यपराद्धम् । अतस्तेनैव राजारामेण घातयितव्या धर्मद्रोहिणः । तन्महाराजसैन्यानि प्रेष्यन्तामुत्तरां प्रति । तैरुपेतोऽखिलान्म्लेच्छान् राजारामो हनिष्यति ॥ २ ॥

एवमात्महृदयगतमेव भावं विवृण्वानमभिनन्द्य सचिववरं यवनकुलमामूलोन्मूलनाय राजारामान्तिके प्राहिणोत् भोसलकुलमणिः बलं निखिलम् ॥ ३ ॥

अथ शहजिमहेन्द्रोस्सैन्यमुद्दामजन्य-
प्रणयि यवनजालोन्मूलनायातिवेलम् ।
विनिरगमदुदीचीं प्रत्यमन्दप्रभावं
प्रचुरशुभनिमित्तानन्दि तञ्जानगर्याः ॥ ४ ॥

तदानीं खलु ॥ ४ ॥

इन्धानातिमदान्धसिन्धुरघटा बृंहाभिरुद्बृंहिताः
त्वङ्गत्तुङ्गतुरङ्गरत्नपटलीहेषाभिरापोषिताः ।
युद्धाबद्धकुतूहलोद्भटभटक्ष्वेलारवैः स्फारिताः
भेरीभाङ्कृतयो व्यधुः हरिदिभान् कर्णज्वरोद्घूर्णितान्
॥ ५ ॥

अमुद्र एष सेनासमुद्रः स्वप्रतिनिधिं सलिलनिधिं शोषयितुमिवासूयाविशेषेण दशदिशावकाशकवलीकरणनिपुणं खरतरदिवाकरकरनिकरप्रसरनिरोधकरं अकाण्डे प्रचण्डीकृतचक्रवाकचक्रसाध्वसं रेणुजालं उदक्षिपत् रूक्षतरम् ॥ ५ ॥

अस्मत्प्रभोः दीप्रतरे प्रतापे
जगत्प्रकाशे सति किं न्वनेन ।
इतीव शाहक्षितिपस्य सेना
रविं रजोभिः स्थगितं व्यतानीत् ॥ ६ ॥

तदा किल मत्तमहेभविशङ्कटकटतटनिष्यन्दमानामन्दमदधारासारकर्दमीकृतं सेनारेणुनिकरं अभङ्गजवाः शताङ्गा रथाङ्गनेमिपरिपेषणैरशेषमशोषयन् ॥ ६ ॥

शहजिनरपतेरनीकिनो
यवनसमुद्धृतिबद्धकङ्कणा ।
कतिपयदिवसैः शुभोत्तरै-
रभजत शेञ्जिपुरीं किलाऽञ्जसा ॥ ७ ॥

तदनु राजारामो दूतमुखेन दुर्विनयपरित्यागाय बोधितस्य यवनजातस्य दुर्व्यवसितमवसाय दण्डोपायमेव धन्यतरं मन्यमानः शाहमहाराजसेनया सह प्रस्थितो मदान्धं न्यरुन्ध बलं म्लेच्छानां हतेच्छानाम् ॥ ७ ॥

शाहक्ष्मापालभूमीतलबलमथनोद्दामसेनासमूहं
वातेनात्यानुकूल्यं मुहुरुपवहता वर्धितोत्साहसारम् ।
उद्धूतैर्हेतिजालैः धवलधवलितवियच्चक्रमाक्रान्ति सज्जं
म्लेच्छौघोऽग्निं पतङ्गव्रज इव निजनाशाय तुच्छोऽभ्यगच्छत्
॥ ८ ॥

अथ खलु निखिललोकभीषणं हस्तिमल्लशुण्डादण्डसमुत्क्षिप्तदन्तकुन्ताग्रविधृतप्रतियोधं रणरङ्गनटनचटुलतरतुरङ्गसङ्घखुरनिकरशकलितगणनातीतकुणपगणं, विततविमतान्त्रतन्तुसंयोजितत्रुटितमौर्वीककोदण्डकाण्डं प्रवीरकृपाणप्रहतमददन्तिदन्तनिष्ठ्यूतस्फुलिङ्गपरिदीपिताग्रक्षतजबिन्दुसिक्तनलीकरज्जुकं नृत्यत्कबन्धस्कन्धपरिक्षरितकदुष्णरुधिरधारासमास्वादनविरचित-

साहसमदोद्धतगृध्रं निकृत्तहस्तिपदकच्छपनिविडाभिः समाकृष्टखड्गमहा-मीनाभिः विशङ्कटखेटकावर्तमण्डलमण्डिताभिः संच्छिन्नमदवारणशुण्डादण्डवी-चीनिचिताभिः धवलतरोष्णीषडिण्डीरखण्डाभिः विलोलतरकुणपशिरोरुह-शैवालसङ्कुलाभिः शोणितनदीभिः अतिदुस्तरं सङ्ग्रामखेलनं अतन्वन् अतनुतरं महोद्भटा महाराजसैन्यभटाः ॥ ८ ॥

शाहाधिराजस्य महामहिम्नः
प्रतापवह्नेरभिवर्धनाय ।
भटास्तदीया निशितैर्निजास्त्रै-
रखण्टयन् म्लेच्छसमित्समूहान् ॥ ९ ॥

तदा कराग्रासिहतैः पतद्भिः
समुत्पतद्भिर्द्विषतां शिरोभिः ।
रणाङ्गणेषु व्यरुचत् जयश्रीः
समुल्लसत्कण्टकखेलनाय ॥ १० ॥

स्रस्तोष्णीषाः पार्श्वसङ्कीर्णशस्त्राः
प्रोद्भ्रान्तासृग्रञ्जितश्मश्रुजालाः ।
साङ्ग्रामोर्व्यां वीजिता गृध्रपक्षैः
सर्वेऽकुर्वन् दीर्घनिद्रां तुलुष्काः ॥ ११ ॥

यवननिवहदावान् दुस्सहामर्षकीला-
नवनितलविसृप्तानद्भुतैः शस्त्रवर्षैः ।
प्रशमितवति शाहाधीशसैन्याम्बुवाहे
हृतरिपुगणराजिः प्रापदिङ्गालशोभाम् ॥ १२ ॥

म्लेच्छोद्गच्छद्रुधिरसलिलक्लिन्नमांसौघपङ्के
युद्धक्षेत्रे परमविपुले शाहराजस्य वीराः ।
भिन्नारातिद्विपवरबृहत्कुम्भनिश्च्युतमुक्ता-
जालव्याजादविरलतरं कीर्तिबीजान्यवापुः ॥ १३ ॥

अथ लघुतरमायातेन सस्वेदवारि-
स्रवनिटिलतलेनाप्तेन दूतेन सम्यक् ।
कथितसमरवृत्तं हृष्टचित्तं नरेन्द्रं
रहसि पुनरुपागात् स्वस्थचेतास्स धर्मः ॥ १४ ॥

ततः कृतप्रणतिमसौ महीपतिं
प्रमोदतो विकसितगण्डमण्डलः ।
परामृशन् पुलकमनोज्ञपाणिना
व्यवर्धयत् सुमधुरयैवमाशिषा ॥ १५ ॥

नाशास्यमितरद्वस्तु
समस्तं हस्तगामि ते ।
एकराज इव त्वां त्व-
मेवं पुत्रमवाप्नुहि ॥ १६ ॥

इतः तत्रभवतः प्रसादात् अहमपगतभीतिः सुस्थतरे भूमण्डले सर्वतः सञ्चरन् मुदितैः स्वबन्धुभिः ब्राह्मणगणैरभिनन्दितः तव श्रेयसे जागरूकः प्राप्नुयामनन्तमानन्दम् ॥ ९ ॥

विशिष्य भवत्प्रेमास्पदे चोलदेशे प्राप्तविकासः खेलनं कलयेयम् ॥ १० ॥

इत्युक्त्वा चरता तेन
सर्वतः परिशोभितम् ।
शास्ति शाहमहीपोऽसा-
वखण्डं क्षितिमण्डलम् ॥ १७ ॥

तेन पुण्यचरित्रेण
धरित्रीं साधु शासता ।
विस्मारिताः प्रजा भूमा-
वेकराजं गुणार्णवम् ॥ १८ ॥

शाहे राजनि राजनीतिचतुरे शासत्यशेषां भुवं
कौटिल्यं सुदृशां भ्रुवोः कठिनता तत्तुङ्गवक्षोजयोः।
मान्द्यं तन्मदचङ्क्रमेषु कृशता तन्मध्यदेशे शुभे
लौल्यं [तत्तनुरोचिषि प्रकटितं दृष्टं न राज्ये प]रम्
॥ १९ ॥

नानाविद्वत्कविजनगिरां भागधेयोच्चयस्य
श्रीशाहेन्दोः नवनवरुचा गौरगौरेषु कीर्त्या।
लोकेष्वच्छद्युतिरिह शरत्पूर्णिमाचन्द्रिकौघः
साम्यं शङ्खान्तरनिवसतेः शुद्धदुग्धस्य धत्ते ॥ २० ॥

धून्वन् सर्वरथाङ्गदम्पतिषु तां रात्रौ वियोगव्यथा-
मद्रीन्द्रे च दिगम्बरस्य हिमसंक्लेशं समुच्चाटयन्।
नित्यं शात्रवकौशिकान् गिरिदरीमध्यं समध्यासयन्
शाहेन्द्रस्य तनोत्यहो कुवलये शोभां प्रतापांशुमान्
॥ २१ ॥

इह किल सकलजनसन्तापहरणनिपुणैः सुधामयैः किरणैरिव शारदराकासुधाकरः कोमलसुरभिलैः कुसुमकुलैरिव कल्पकतरुः उन्नत-मधुरैरूर्मिनिकरैरिव क्षीरसागरः सन्तोषितविद्वद्गणैः सद्गुणैः भूरितरं विभाति भोसलवंशावतंसः ॥ १० ॥

कथञ्चित् वा गणयितुं
शक्यन्ते तारकागणाः ।
न तु वाङ्मनसाऽतीताः
शाहभूमिपतेर्गुणाः ॥ २२ ॥

इन्धानभासि गुणसिन्धावशेषबुधबन्धावलम्बवलना
सन्धाविता सुहृदि रुन्धान एव भुवनं धात्रीशवन्द्ययशसा ।
गन्धाधिकस्वपदबन्धा दधत्यनुपमं धाम शाहनृपतौ
किं धारयन्ति नुतिसन्धातिसाहसमनन्धाः कवित्वसरणौ
॥ २३ ॥

किं बहुना — तस्य किल भोसलकुलकलशसिन्धुकुमुदबन्धोर-परिमितान् अखिलजगत्प्रतीतान् सकलजनानन्दनचणान् सद्गुणगणान् वर्णयितुमलब्धवर्णः सहस्रमुखोऽपि वैदुष्यशालिप्रमुखोऽपि शेषस्तेषां विशेषेण विमुक्तसङ्ख्यानि मुखानि विगतेयत्तामपि विद्वत्तामवाप्तुकामो नूनं पवनाशन एव रसातलगतो वर्तते ॥ ११ ॥

सायं मुहुस्सुमनसामुपसेवनीयो
हृद्यैः करैः कुवलयस्य विकासकारी ।
सर्वज्ञमौलिमणिरत्र समास्सहस्रं
सन्मण्डलो जयतु शाहमहीमहेन्दुः ॥ २४ ॥

अलिकलभाभमूर्तिरवनीतनयासहितो
विहितनिशाचरव्रजनिरासशरासधरः ।
सकलवरप्रदस्स रघुवंशवतंसविभुः
शहजिनरेश्वरस्य यशसां गुरुतां कुरुताम् ॥ २५ ॥

इत्यभिनवभोजराजशाहमहीमहेन्द्रसुन्दरमुखचन्द्रसन्दर्शनमहिमसान्द्रीकृत-
वाग्विलासस्य रामभद्राध्वरिवरप्रियशिष्यस्य तदीयवंशजन्मनो
भूमिनाथविद्वत्कवेः कृतौ धर्मविजये चतुर्थस्तबकः ॥
श्रीरामार्पणमस्तु



# धर्मविजयचम्पूस्थपद्यानामनुक्रमसूची

# शोधनिका

| अशुद्धिः | शुद्धिः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| राजामित | राजाऽमित | 1 | 5 |
| भूतोऽनुतश्रीः | भूतो नुतश्रीः | ,, | ,, |
| व्यापृथै | व्यापृतै | 2 | 6 |
| खुलु | खलु | 3 | 5 |
| तारकमन्त्रोमदेश | तारकमन्त्रोपदेश | ,, | 9 |
| वाराणसीमधिगम्यपरितः | वाराणसीमधिगम्य परितः | ,, | 11 |
| धर्मयते | घर्मयते | 4 | 15 |
| शाहमहाराजोनाम | शाहमहाराजो नाम | 5 | 17 |
| वाप्पाम्भः प्रसरः | वाप्पाम्भःप्रसरः | 6 | 7 |
| कम्पा | पम्पा | ,, | 13 |
| स्वपयः परिपोषिततया | स्वपयःपरिपोषिततया | 7 | 5 |
| चाशेषकिल्बिष, | चाशेषकिल्बिष- | ,, | 7 |
| महेन्द्रण | महेन्द्रेण | ,, | 9 |
| मित्रमघसङ्घं | मित्रमघसंघं | ,, | 12 |
| दुखवगाह | दुरवगाह | ,, | 14 |
| सेनामिव मेदुर | सेनामिव भङ्गपरम्परा- सहितां तदीयवाणीमिव | ,, | 15 |
| कावेरीमर्चतिस्म | कावेरीमर्चति स्म | ,, | 18 |
| मायूरतीर्थेयथाविधि | मायूरतीर्थे यथाविधि | 8 | 3 |
| शीतलेमूलतले | शीतले मूलतले | ,, | 12 |

| अशुद्धिः | शुद्धिः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| अभ्रं लिह | अभ्रंलिह | 10 | 6 |
| त्रे ताग्नि | त्रेताग्नि | 11 | 4 |
| बहि र्वेदिकामिलित, | बहिर्वेदिकामिलित- | ,, | 6 |
| शाहराजचरि तैरिव | शाहराजचरितैरिव | ,, | 18 |
| धर्मविजयचवां | धर्मविजयचम्प्वां | 12 | 1 |
| सद्र्व षैर्प्यद्र्व षैः | सद्र्वषैरप्यद्र्वषैः | ,, | 2 |
| रूपत | रूपत- | ,, | 9 |
| भ्रु कुटी | भ्रुकुटी | 14 | 11 |
| प्रवृत्यासक्त | प्रवृत्त्यासक्त | ,, | 16 |
| मन्थर | मन्थर | ,, | ,, |
| विद्रद्वृ न्दः | विद्रद्वृन्दः | ,, | 17 |
| निमित्तशतैरुत्ता लित | निमित्तशतैरुत्तालित | 17 | 17 |
| धर्मविजयचवां | धर्मविजयचम्प्वां | 18 | 1 |
| मन्दरगिरिमथ्यमान | मन्दरगिरिमथ्यमान | ,, | 10 |
| मधुकरवल्प्त | मधुकरक्लृप्त | ,, | 11 |
| व्यापारैरिव | व्यापारैरिव | ,, | 18 |
| स:तमस | सन्तमस | 19 | 15 |
| गोपुरै | गोपुरै- | 20 | 11 |
| समुद्यम्य- | समुद्यम्य | 21 | 15 |
| भ्रं शकरैः | भ्रंशकरैः | 22 | 3 |
| भ्र विक्रमैक | भ्रूविक्रमैक | ,, | 11 |
| धर्मोल्लसितैः | धर्मोल्लसितैः | 23 | 2 |
| कुवलयशोभाकरैः | कुवलयशोभाकरैः | ,, | ,, |
| महादोषोपेतैरपि | महादोषोपेतैरपि | ,, | ,, |
| वर्जितैः | वर्जितैः | ,, | 3 |

| अशुद्धिः | शुद्धिः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रकाण्डैं: | प्रकाण्डैः | 23 | 3 |
| शेभा | शोभा | ,, | 11 |
| महानैंगम | महानैगम | ,, | 18 |
| विशालदीर्घाभ: | विशालदीर्घाभिः | 24 | 5 |
| कीर्तां रेक | कीर्तिरेक | ,, | 8 |
| वैंतानिक | वैतानिक | ,, | 11 |
| कोलाहलैं: | कोलाहलैः | ,, | ,, |
| समुल्लसितैं: | समुल्लसितैः | ,, | 13 |
| सङ्कुलैं: | सङ्कुलैः | ,, | 15 |
| समुच्छ्वासि | समुच्छ्वासि | ,, | 16 |
| पवित्रितैं: | पवित्रितैः | ,, | 18 |
| मेदुरैं: | मेदुरैः | ,, | 19 |
| अघोंघं | अघौघं | ,, | ,, |
| महीरूहेन्द्रा: | महीरुहेन्द्राः | 26 | 1 |
| अरूणांशु | अरुणांशु | ,, | 4 |
| उच्च्चै·श्रवसो | उच्चैःश्रवसो | ,, | 6 |
| सोवर्ण | सौवर्ण | ,, | 10 |
| विद्रु म | विद्रुम | ,, | ,, |
| मनोहरद्भि: | मनो हरद्भिः | 27 | 2 |
| वासुदेव्यापारै | वासुदेवव्यापारै | ,, | ,, |
| मनोर्धेर्य: | मनोधैर्यैः | ,, | 16 |
| योधनम | योधनम- | ,, | 17 |
| समलङ्कुत | समलङ्कृत | 28 | 7 |
| त्रैलोवय | त्रैलोक्य | 29 | 10 |
| वकुल | वकुल | 30 | 9 |

| अशुद्धिः | शुद्धिः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रमुस्व | प्रमुख | 30 | 14 |
| विलासिनी | विलासिनी | ,, | 16 |
| चटुल | चटुल | 32 | 2 |
| ग्रहीतु | ग्रहीतु- | 33 | 8 |
| सम्तति | सन्तति | ,, | 14 |
| वोर | वीर | 34 | 4 |
| भहिम | महिम | ,, | 9 |
| भांरीभाङ्कृतयां | भांरीभाङ्कृतयो | 37 | 4 |
| दीष्प्रतरे | दीप्रतरे | ,, | 9 |
| धारासार | धारासार- | ,, | 13 |
| किलाऽञ्जसा | किलाञ्जसा | 38 | 4 |
| म्लेच्छौघोग्निं | म्लेच्छौघोऽग्निं | ,, | 11 |
| रवड्ग | खड्ग | 39 | 1 |
| वर्धनाय | वर्धनाय | ,, | 7 |
| अखण्टयन् | अखण्डयन् | ,, | 9 |
| रणाङ्कणेपु | रणाङ्गणेषु | ,, | 12 |
| व्यवर्धयत् | व्यवर्धयत् | 40 | 16 |
| कुसुमकुलैंरिव | कुसुमकुलैरिव | 42 | 14 |
| १० | ११ | ,, | 16 |
| ११ | १२ | 43 | 13 |
| धर्मविजयचम्वां | धर्मविजयचम्प्वां | 44 | 1 |
| करैः | करैः | ,, | 3 |
| चतुर्भ | चतुर्थ | ,, | 12 |
| श्रीरामार्पणयस्तु | श्रीरामार्पणमस्तु | ,, | 13 |

